आगंता मारिषण्यत प्रस्थावानो मापस्थात समन्यवः।
दृढाचिद्यमयिष्णवः ॥ ३ ॥
आयाह्ययमिंदवे श्वपते गोपत उर्वरापते।
सोमꣳ सोमपते पिब ॥ ४ ॥
त्वया हस्विद्युजा वयं प्रतिश्वसंतं वृषभ ब्रुवीमहि।
सꣳस्थे जनस्य गोमतः ॥ ५ ॥
गावश्चिद्वासमन्यवः सजात्येन मरुतः सबंधवः।
रिहते ककुभो मिथः ॥ ६ ॥
त्वन्न इंद्राभर ओजो नृम्णꣳ शतक्रतो विचर्षणे।
आवीरं पृतनासहं ॥ ७ ॥
अधा हींद्र गिर्वणः उप त्वा कामा ईमहे ससृग्महे।
उदेव ग्मंत उदभिः ॥ ८ ॥
सीदंतस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे।
अभि त्वामिंद्र नोनुमः ॥ ९ ॥
वयमु त्वामपूर्व्य स्थूरन्नकच्चिद्भरंतो ऽवस्यवः।
वज्रिन् चित्रꣳ हवामहे ॥ १० ॥

स्व॰ २। उ॰ २। धा॰ ४१। छ ॥ दशति ॥ २ ॥

स्वादोरित्था विषुवतो मधोः पिबंति गौर्यः।
या इंद्रेण सयावरि वृष्णा मदंति शोभथा वस्वीरनु स्वराज्यं ॥ १ ॥
इत्था हि सोम इन्मदो ब्रह्मा चकार वर्धनम्।
शविष्ठ वज्रिन्नोजसा पृथिव्या निःशशा अहिमर्चन्ननु स्वराज्यं ॥ २ ॥

इंद्रो मदाय वावृधे शवसे वृत्रहा नृभिः।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्रनो॰विषत्॥ ३॥
इंद्र तुभ्यमिदद्रिवो॰नुत्तं वज्रिन्वीर्यं।
यद्ध त्यं मायिनं मृगं तव त्यन्मायया वधीरर्चन्ननु स्वराज्यं॥ ४॥
प्रेह्यभीहि धृष्णुहि न ते वज्रो नियंश्सते।
इंद्र नृम्णं२ हि ते शवो हनो वृत्रं जया।
अपोर्चन्ननु स्वराज्यं॥ ५॥
यदुदीरत आजयो धृष्णवे धीयते धनं।
युंक्ष्वा मदच्युता हरी कं२ हनः कं वसौ दधो स्मां२ इंद्र वसौ दधः॥ ६॥
अक्षन्नमीमदंत ह्यवप्रिया अधूषत।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विंद्र तेहरी॥ ७॥
उपोषु शृणुही गिरो मघवन्मातथा इव।
कदा नः सूनृतावतः कर इदर्थयास इद्योजान्विंद्र ते हरी॥ ८॥
चंद्रमा अप्स्वशंतरा सुपर्णो धावते दिवि।
न वो हिरण्यनेमयःपदं विंदंति विद्युतो वित्तं म अस्य रोदसी॥ ९॥
प्रति प्रियतमं२ रथं वृषणं वसुवाहनं।
स्तोता वामश्विना वृषिःस्तोमेभिर्भूषति प्रतिमाध्वी मम श्रुतं२ हवं॥१०॥

स्व॰ १३। उ॰ ५। धा॰ ७५। णु॥ दशति॥ ३॥

आ ते अग्न इधीमहि द्युमंतं देवाजरं।
यद्ध स्य ते पनीयसी समिद्दिदयति द्यवीषं२ स्तोतृभ्य आभर॥ १॥
आग्निन्नस्ववृक्तिभिर्होतारं त्वा वृणीमहे।

शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥ २॥
महे नो अद्य बोधयोषो राये दिवित्मती ।
यथाचिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३॥
भद्रन्नो अपि वातय मनो दक्षमुत क्रतुं ।
अधा ते सख्ये अंधसो वि वो मदे रणा गावो न यवसे विवक्षसे ॥ ४॥
क्रत्वा महाꣳ अनुष्वधं भीम आ वावृते शवः ।
श्रिय ऋष्व उपाकयोर्निशिप्री हरिवां दधे हस्तयोर्वज्रमायसं ॥ ५॥
स घातं वृषणꣳ रथमधितिष्ठाति गोविदं ।
यः पात्रꣳ हरियोजनं पूर्णमिंद्र चिकेतति योजान्विंद्र ते हरी ॥ ६॥
अग्निं तं मन्ये यो वसुरस्तं यं यंति धेनवः ।
अस्तमर्वंत आशवो ऽस्तं नित्यासो वाजिन इषꣳ स्तोतृभ्य आभर ॥ ७॥
न तमꣳहो न दुरितं देवासो अष्ट मर्त्यं
सजोषसो यमर्यमा मित्रो नयति वरुणो अतिद्विषः ॥ ८॥

ख॰ ७ । उ॰ ३ । धा॰ ५७ । जे ॥ दशति ॥ ४॥

परि प्रधन्वेंद्राय सोमस्वादुर्मित्राय पूष्णे भगाय ॥ १॥
पर्यूषु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥ २॥
पवस्व सोम महाꣳ समुद्रः पिता देवानां विश्वाभि धाम ॥ ३॥
पवस्व सोम महे दक्षायाश्वो न निक्तो वाजीधनाय ॥ ४॥
इंदुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ ५॥
अनु हि त्वा सुतꣳ सोम मदामसि महे समर्यराज्ये ।

वाजाꣳ अभि पवमान प्रगाहसे ॥ ६ ॥
क ईं व्यक्ता नरः सनीडा रुद्रस्य मर्या अधा स्वश्वाः ॥ ७ ॥
अग्ने तमद्याश्वन्न स्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशं ।
ऋध्यामा त ओहैः ॥ ८ ॥
आविर्मर्या आवाजं वाजिनो अग्मं देवस्य सवितुः सवं ।
स्वर्गाꣳ अर्वतो जयत ॥ ९ ॥
पवस्व सोम द्युम्नी सुधारोमहाꣳ अवीनामनुपूर्व्यः ॥ १० ॥

स्व· ८ । उ· २ । धा· ३५ । दु ॥ दशति ॥ ५ ॥

विश्वतोदावन्विश्वतो न आभर यं त्वा शविष्ठमीमहे ॥ १ ॥
एष ब्रह्मा य ऋत्विय इंद्रो नाम श्रुतो गृणे ॥ २ ॥
ब्रह्माण इंद्रं महयंतो अर्कैरवर्धयन्नहये हंतवा उ ॥ ३ ॥
अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमंतं ॥ ४ ॥
शं पदं मघं रयीषिणे न काममव्रतो हिनोति न स्पृशद्रयिं ॥ ५ ॥
सदा गावः शुचयो विश्वधायसः सदादेवा अरेपसः ॥ ६ ॥
आयाहि वनसा सह गावः सचंत वर्तनिं यदूधभिः ॥ ७ ॥
उप प्रक्षे मधुमति क्षियंतः पुष्येम रयिं धीमहे त इंद्र ॥ ८ ॥
अर्चंत्यर्कं मरुत स्वर्का आस्तोभति श्रुतो युवा स इंद्रः ॥ ९ ॥
प्र व इंद्राय वृत्रहंतमाय विप्राय गाथं गायता यं जुजोषते ॥ १० ॥

स्व· ७ । उ· २ । धा· ४२ । ष्ठा ॥ दशति ॥ ६ ॥

अचेत्यग्निश्चिकितिर्हव्यवाण् सुमद्रथः ॥१॥
अग्ने त्वन्नो अंतम उत त्राता शिवो भुवो वरूथ्यः ॥२॥
भगो न चित्रो अग्निर्महोनां दधाति रत्नं ॥३॥
विश्वस्य प्रस्तोभ पुरो वा सन्यदि वेह नूनं ॥४॥
उषा अप स्वसुष्टमःसंवर्तयति वर्तनिꣳ सुजातता ॥५॥
इमा नु कं भुवना सीषधेमेंद्रश्च विश्वे च देवाः ॥६॥
वि स्रुतयो यथापथ इंद्र त्वद्यंतु रातयः ॥७॥
अया वाजं देवहितं सनेम मदेम शतहिमाःसुवीराः ॥८॥
ऊर्जा मित्रो वरुणःपीन्वतेडाःपीवरीमिषं कृणुही न इंद्र ॥९॥
इंद्रो विश्वस्य राजति ॥१०॥

ख॰ ५। उ॰ ४। धा॰ ४१। भ॥ दशति ॥७॥

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृंपत्सोममपिबद्वि
ष्णुना सुतं यथावशं।
स ईं ममाद महिकर्म कर्तवे महामुरुꣳ सैनꣳ सश्चद्देवो देवꣳ
सत्य इंदुःसत्यमिंद्रं ॥१॥
अयꣳ सहस्रमानवो दृशःकवीनां मतिर्ज्योतिर्विधर्म।
ब्रध्नःसमीचीरुषसःसमैरयदरेपसः सचेतसःस्वसरे मन्युमंत
श्चिता गोः ॥२॥
एंद्र याह्युप नःपरावतो नायमच्छा विदथानीव सत्पतिरस्ता
राजेव सत्पतिः।
हवामहे त्वा प्रयस्वंतःसुतेष्वापुत्रासो न पीतरं वाजसातये मꣳ
हिष्ठं वाजसातये ॥३॥

तमिंद्रं जोहवीमि मघवानमुग्रꣳ सत्रा दधानमप्रतिष्कुतꣳ
श्रवाꣳसि भूरि।
मꣳहिष्ठो गीर्भिराच यज्ञियो ववर्त राये नो विश्वा सुपथा कृणो
तु वज्री ॥४॥
अस्तु श्रौषट् पुरो अग्निं धिया दध आनु त्यच्छर्द्धो दिव्यं
वृणीमह इंद्रवायू वृणीमहे।
यद्ध क्राणा विवस्वते नाभा संदाय नव्यसे।
अध प्र नूनमुपयंति धीतयो देवाꣳ अच्छ न धीतयः ॥५॥
प्र वो महे मतयो यंतु विष्णवे मरुत्वते गिरिजा एवया मरुत्।
प्र शर्द्धाय प्र यज्यवे सुखादये तवसे भंददिष्टये धुनिव्रताय
शवसे ॥६॥
अया रुचा हरिण्या पुनानो विश्वा द्वेषाꣳसि तरति सयुग्वभिः
सुरो न सयुग्वभिः।
धारापृष्ठस्य रोचते पुनानो अरुषो हरिः।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥७॥
अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ
रत्नधामभिप्रियं मतिं।
उर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत
सुक्रतुः कृपास्वः ॥८॥
अग्निꣳ होतारं मन्ये दास्वंतं वसो सूनुꣳ सहसो जातवेदसं
विप्रन्न जातवेदसं।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा।
घृतस्य विभ्राष्टिमनुशुक्रशोचिष आजुह्वानस्य सर्पिषः ॥९॥

तव त्यन्नर्यन्नृतोप इंद्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतं।
यो देवस्य शवसा प्रारिणा असुरिणन्नपः।
भुवो विश्वमभ्यदेवमोजसा विदेदूर्जं॰ शतक्रतुर्विदेदिषं॥१०॥

स्व॰ ३। उ॰ ६। धा॰ १०। ट॥ दशति॥८॥

॥ दशति ऐंद्रं समाप्तं॥

उच्चा ते जातमंधसो दिवि सद्भूम्याददे। उग्रं॰ शर्म महि श्रवः॥१॥
स्वादिष्ठया मदिष्ठया पवस्व सोमधारया। इंद्राय पातवे सुतः॥२॥
वृषा पवस्व धारया मरुत्वते च मत्सरः। विश्वा दधान ओजसा॥३॥
यस्ते मदो वरेण्यस्तेनापवस्वांधसा। देवावीरघशं॰सहा॥४॥
तिस्रो वाच उदीरते गावो मिमंति धेनवः। हरिरेति कनिक्रदत्॥५॥
इंद्रायेंदो मरुत्वते पवस्व मधु मत्तमः। अर्कस्य योनिमासदं॥६॥
असाव्यं॰शुर्मदायाप्सु दक्षो गिरिष्ठाः। श्येनो न योनिमासदत्॥७॥
पवस्व दक्षसाधनो देवेभ्यः पीतये हरे। मरुद्भ्यो वायवे मदः॥८॥
परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्। मदेषु सर्वधा असि॥९॥
परिप्रिया दिवः कविर्वयां॰सि नप्त्योर्हितः। स्वानैर्याति कविक्रतुः॥१०॥

स्व॰ ६। उ॰ ३। धा॰ ४२। गा॥ दशति॥९॥

प्र सोमासो मदच्युतः श्रवसे नो मघोनां। सुता विदथे अक्रमुः॥१॥
प्र सोमासो विपश्चितो॰पो नयंत ऊर्मयः। वनानि महिषा इव॥२॥
पवस्वेंदो वृषा सुतः कृधी नो यशसो जने। विश्वा अप द्विषो जहि॥३॥
वृषा ह्यसि भानुना द्युमंतं त्वा हवामहे। पवमानः स्वर्दृशं॥४॥

इंदुः पविष्टचेतनः प्रियः कवीनां मतिः। सृजदश्वꣳ रथीरिव॥५॥
असृक्षत प्र वाजिनो गव्या सोमासो अश्वया। शुक्रासो वीरयाशवः॥६॥
पवस्व देव आयुषगिंद्रं गछतु ते मदः। वायुमारोह धर्मणा॥७॥
पवमानो अजीजनद्दिवश्चित्रन्न तन्यतुं। ज्योतिर्वैश्वानरं वृहत्॥८॥
परि स्वानास इंदवो मदाय बर्हणा गिरा। मधो अर्षंति धारया॥९॥
परिप्रासिष्यदत्कविः सिंधोरूर्मावधिश्रितः। कारुं विभ्रत्पुरुस्पृहं॥१०॥

स्व॰ ११। उ॰ ना। धा॰ ४९। हो॥ दशति॥१०॥

॥ पञ्चमः प्रपाठकः समाप्तः॥

उपोषु जातमप्तुरं गोभिर्भंगं परिष्कृतं। इंदुं देवा अयासिषुः॥१॥
पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः। शुंभंति विप्रं धीतिभिः॥२॥
आविशन्कलशं सुतो विश्वा अर्षन्नभि श्रियः। इंदुरिंद्राय धीयते॥३॥
असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः। कार्ष्मन्वाजी न्यक्रमीत्॥४॥
प्रयद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः। घ्नंतः कृष्णामप त्वचं॥५॥
अपघ्नन्पवसे मृधःक्रतुवित्सोममत्सरः। नुदस्वादेवयुं जनं॥६॥
अया पवस्व धारया यया सूर्यमरोचयः। हिन्वानो मानुषीरपः॥७॥
स पवस्व य आविथेंद्रं वृत्राय हंतवे। वव्रिवाꣳसं महीरपः॥८॥
अया वीती परिस्रव यस्त इंदो मदेष्वा। अवाहन्नवतीर्नव॥९॥
परिद्युक्षꣳ सनद्रयिं भरद्वाजन्नो अंधसा। स्वानो अर्ष पवित्र आ॥१०॥

स्व॰ ९। उ॰ ६। धा॰ ३५। तु॥ दशति॥१॥

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः। सꣳसूर्येण दिद्युते॥१॥
आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे। पांतमापुरुस्पृहं॥२॥

अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आनया। पुनाहींद्राय पातवे॥३॥
तरत्स मंदी धावति धारा सुतस्यांधसः। तरत्स मंदी धावति॥४॥
आपवस्वसहस्रिणꣳ रयिꣳ सोम सुवीर्यं। अस्मे श्रवाꣳसि धारया॥५॥
अनुप्रत्नास आयवः पदन्नवीयो अक्रमुः। रुचे जनंत सूर्यं॥६॥
अर्षा सोम द्युमत्तमोभिद्रोणानि रोरुवत्। सीदन्योनौ वनेष्वा॥७॥
वृषा सोमद्युमाꣳ असि वृषा देव वृषव्रतः। वृषा धर्माणि दध्रिषे॥८॥
इषे पवस्व धारया मृज्यमानो मनीषिभिः। इंदो रुचाभिगा इहि॥९॥
मंद्रया सोमधारया वृषा पवस्व देवयुः। अव्या वारेभिरस्मयुः॥१०॥
अया सोमसुकृत्यया महान्त्सन्नभ्यावर्द्धथाः। मंदान इद्वृषायसे॥११॥
अयं विचर्षणिर्हितः पवमानः स चेतति। हिन्वान आप्यं बृहत्॥१२॥
प्र न इंदो महे तु न ऊर्मिन्नविभ्रदर्षसि। अभिदेवाꣳ अयास्यः॥१३॥
अपघ्नन्पवते मृधोपसोमो अराव्णः। गच्छन्निंद्रस्य निष्कृतं॥१४॥

स्व॰ १५। उ॰ २। धा॰ ५७। फो॥ दशति॥२॥

पुनानः सोम धारयापो वसानो अर्षसि।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः॥१॥
परीतो षिंचत सुतꣳ सोमो य उत्तमꣳ हविः।
दधन्वाङ् यो नर्यो अप्स्वंꣳतरा सुषाव सोममद्रिभिः॥२॥
आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया।
जनो न पुरि चम्वोर्विशद्धरिस्सदो वनेषु दध्रिषे॥३॥
प्र सोम देववीतये सिंधुर्न पिप्ये अर्णसा।
अꣳशोः पयसा मदिरो न जागृविरच्छाकोशं मधुश्चुतं॥४॥

सोम उष्वाणः सोतृभिरधिष्णुभिरवीनां।
अश्वयेव हरितायाति धारया मंद्रयायाति धारया॥५॥
तवाहं सोम रारणसख्य इंदो दिवेदिवे।
पुरूणि वभ्रो निचरंति मामवपरिधींरतिताँ इहि॥६॥
मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि।
रयिं पिशंगं वहुलं पुरुस्पृहं पवमानाभ्यर्षसि॥७॥
अभि सोमास आयवः पवंते मद्यं मदं।
समुद्रस्याधिविष्टपे मनीषिणो मत्सरासो मदच्युतः॥८॥
पुनानः सोमजागृविरव्या वारैः परि प्रियः।
त्वं विप्रो अभवोंगिरस्तम मध्वा यज्ञं मिमिक्ष णः॥९॥
इंद्राय पवते मदः सोमो मरुत्वते सुतः।
सहस्रधारो अत्यव्यमर्षति तमी मृजंत्यायवः॥१०॥
पवस्व वाजसातमोऽभिविश्वानि वार्या।
त्वं समुद्रः प्रथमे विधर्मं देवेभ्यः सोम मत्सरः॥११॥
पवमान असृक्षत पवित्रमतिधारया।
मरुत्वंतो मत्सरा इंद्रिया हया मेधामभिप्रयांसिच॥१२॥

स्व॰ १९। उ॰ ३। धा॰ ९१। द॥ दशति॥३॥

प्र तु द्रव परिकोशन्निषीदनृभिः पुनानो अभिवाजमर्ष।
अश्वन्न त्वा वाजिनं मर्जयंतोच्छा वर्हिरशनाभिर्नयंति॥१॥
प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमविवक्ति।
महिव्रतः शुचिवंधुः पावकः पदा वराहो अभ्येति रेभन्॥२॥

तिस्रो वाच ईरयति प्रवह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषां।
गावो यंति गोपतिं पृच्छमानाः सोमं यंति मतयो वावशानाः॥३॥
अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्तरसं।
सुतः पवित्रं पर्येति रेभन्। मितेवसद्मः पशुमंति होता॥४॥
सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः॥५॥
अभि त्रिपृष्ठं वृषणं वयोधामङ्गोषिणमवावशं त वाणीः।
वनावसानो वरुणो न सिंधुर्वि रत्नधा दयते वार्याणि॥६॥
अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन् प्रजा भुवनस्य गोपाः।
वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वा वृधे स्वानो अद्रिः॥७॥
कनिक्रंति हरिरासृज्यमानः सीदन्वनस्य जठरे पुनानः।
नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयंत स्वधाभिः॥८॥
एष स्य ते मधुमाँ इंद्र सोमो वृषा वृष्णः परि पवित्रे अक्षाः।
सहस्रदाः शतदा भूरिदावा शश्वत्तमं बर्हिरावाज्यस्थात्॥९॥
पवस्व सोम मधुमाँ ऋतावापो वसानो अधिसानो अव्ये।
अव द्रोणानि घृतवंति रोह मदिंतमो मत्सर इंद्रपानः॥१०॥

ख॰ १८। उ॰ ३। धा॰ ८७। डे॥ दशति॥४॥

प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना।
भद्रान् कृण्वन्निंद्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते॥१॥
प्र ते धारा मधुमतीरसृग्रन्वारं यत्पूतो अत्येष्यव्यं।
पवमान पवसे धाम गोनां जनयन्त्सूर्यमपिन्वो अर्कैः॥२॥

प्र गायताभ्यर्चाम देवांत्सोमं हिनोत महते धनाय।
स्वादुः पवतामतिवारमव्यमासीदतु कलशं देव इंदुः ॥ ३॥
प्रहिन्वानो जनिता रोदस्यो रथो न वाजं सनिषन्नयासीत्।
इंद्रं गच्छन्नायुधा संशिशानो विश्वा वसु हस्तयोरादधानः ॥४॥
तक्षद्यदी मनसो वेनतो वाक् ज्येष्ठस्य धर्मं द्युक्षोरनीके।
आदीमायन्वरमावावशाना जुष्टं पतिं कलशे गाव इंदुं॥ ५॥
साकमुक्षो मर्जयंत स्वसारो दश धीरस्य धीतयो धनुत्रीः।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणन्ननक्षे अत्यो न वाजी ॥ ६॥
अधि यदस्मिन्वाजिनीव शुभः स्पर्द्धंते धियः सूरे न विशः।
अपो वृणानः पवते कवीयान्वृजन्न पशुवर्द्धनाय मन्म ॥ ७॥
इंदुर्वाजी पवते गोन्योघा इंद्रे सोमः सह इन्वन्मदाय।
हंति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ ८॥
अया पवा पवस्वैना वसूनि मांश्चत्व इंदो सरसि प्रधन्व।
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ९॥
महत्तत्सोमो महिषश्चकारापांयद्गर्भो ऽवृणीत देवान्।
अदधादिंद्रे पवमान ओजो ऽजनयत्सूर्ये ज्योतिरिंदुः ॥ १०॥
असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा।
दशस्वसारो अधि सानो अव्ये मृजंति वह्निं सदनेष्वच्छ ॥ ११॥
अपामिवेदूर्मयस्तर्तुराणाः प्र मनीषा ईरते सोममच्छ।
नमस्यंतिरुपचयंति संचाचविशंत्युशतीरुशंतं ॥ १२॥

स्व॰ १९। उ॰ ३। धा॰ ८२। दा॥ दशति ॥ ५॥

पुरोजितीवो अंधसः सुताय मादयित्नवे।
अप श्वानं श्नथिष्ट न सखायो दीर्घजिह्व्यं॥१॥
अयं पूषा रयिर्भगः सोमः पुनानो अर्षति।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे॥२॥
सुतासो मधुमत्तमाः सोमा इंद्राय मंदिनः।
पवित्रवंतो अक्षरन् देवान् गच्छंतु वो मदाः॥३॥
सोमाः पवंत इंदवोऽस्मभ्य गातुवित्तमाः।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः॥४॥
अभी नो वाजसातमं रयिमर्षशतस्पृहं।
इंदो सहस्रभर्णसं तुविद्युम्नं विभासहं॥५॥
अभी नवंते अद्रुहः प्रियमिंद्रस्य काम्यं।
वत्सन्न पूर्व आयुनि जातं रिहंति मातरः॥६॥
आ हर्यताय धृष्णवे धनुष्टन्वंति पौंस्यं।
शुक्रा वियंत्यसुराय निर्णिजे विपामग्रे महीयुवः॥७॥
परित्यं हर्यतं हरिं बभ्रुं पुनंति वारेण।
यो देवान्विश्वाँ इत्परि मदेन सह गच्छति॥८॥
प्र सुन्वानायांधसो मर्तो न वष्ट तद्वचः।
अप श्वानमराधसं हतामखन्न भृगवः॥९॥

स्व॰ १०। उ॰ ५। धा॰ ६१। म॥ दशति॥६॥

अभि प्रियाणि पवते च नो हितो नामानि यह्वो अधि येषु वर्द्धते।
आ सूर्यस्य बृहतो बृहन्नधिरथं विष्वंचमरुहद्विचक्षण॥१॥

अचोदसो नो धन्वंत्विंदवः प्रस्वानासो वृहद्देवेषु हरयः।
विचिदश्नाना इषयो अरातयो ऽर्यो नः संतु सनिषंतु नो धियः॥२॥
एष प्रकोशे मधुमाꣳ अचिक्रददिंद्रस्य वज्रो वपुषो वपुष्टमः।
अभ्यृꣳतस्य सुदुघा घृतश्चुतो वाश्रा अर्षंति पयसा च धेनवः॥३॥
प्रो अयासीदिंदुरिंद्रस्य निष्कृतꣳ सखा सख्युर्न प्रमिनाति संगिरं।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा॥४॥
धर्त्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजाꣳसि कृणुषे नदीष्वा॥५॥
वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः।
प्राणा सिंधूनां कलशाꣳ अचिक्रददिंद्रस्य हार्द्याविशन्मनीषिभिः॥६॥
त्रिरस्मै सप्तधेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्द्धत॥७॥
इंद्राय सोम सुषुतः परिस्रवापामीवाभवतु रक्षसा सह।
माते रसस्य मत्सत द्वयाविनो द्रविणस्वंत इह संत्विंदवः॥८॥
असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत्।
पुनानो वारमत्येष्यव्ययꣳ श्येनो न योनिं घृतवंतमासदत्॥९॥
प्र देवमच्छा मधुमंत इंदवो ऽसिष्यदंत गाव आ न धेनवः।
वर्हिषदो वचनावंत ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे॥१०॥
अंजते व्यंजते समंजते क्रतुꣳ रिहंति मध्वाभ्यंजते।
सिंधोरुच्छ्वासे पतयंतमुक्षणꣳ हिरण्यपावाः पशुमप्सु गृभ्णते॥११॥
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहंतः संतदाशत॥१२॥
स्व॰ १५। उ॰ ११। धा॰ १३७। पे॥ दशति॥७॥

इंद्रमच्छसुता इमे वृषणं यन्तु हरयः।
श्रुष्टे जातास इंदवः स्वर्विदः॥१॥
प्र धन्वा सोम जागृविरिंद्रायेंदो परिस्रव।
द्युमंतꣳ शुष्ममाभर स्वर्विदं॥२॥
सखाय आनिषीदत पुनानाय प्रगायत।
शिशुन्न यज्ञैः परिभूषत श्रिये॥३॥
तं वः सखायो मदाय पुनानमभिगायत।
शिशुन्न हव्यैःस्वदयंत गूर्त्तिभिः॥४॥
प्राणा शिशुर्महीनाꣳ हिन्वन्नृतस्य दीधितिं।
विश्वा परिप्रिया भुवदध द्विता॥५॥
पवस्व देववीतय इंदो धाराभिरोजसा।
आ कलशं मधुमांत्सोम नः सदः॥६॥
सोमः पुनान ऊर्मिणाव्यं वारं विधावति।
अग्रे वाचः पवमानः कनिक्रदत्॥७॥
प्र पुनानाय वेधसे सोमाय वच उच्यते।
भृतिन्न भरा मतिभिर्जुजोषते॥८॥
गोमन्न इंदो अश्ववत्सुतः सुदक्ष धनिव।
शुचिं च वर्णमधि गोषु धारय॥९॥
अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत।
गोभिष्टे वर्णमभिवासयामसि॥१०॥
पवते हर्यतो हरिरतिह्वराꣳसि रꣳह्या।
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः॥११॥
परि कोशं मधुश्चुतं सोमः पुनानो अर्षति।

अभिवाणीर्ऋषीणा२ सप्तानूषत ॥ १२ ॥

स्व· ८ । उ· ३ । धा· ४६ । ड ॥ दशति ॥ ८ ॥

पवस्व मधुमत्तम इंद्राय सोम क्रतुवित्तमो मदः ।

महि द्युक्षतमो मदः ॥ १ ॥

अभिद्युम्नं बृहद्यश इपस्पते दिदीहि देव देवयुं ।

विकोशं मध्यमं युव ॥ २ ॥

आसोतापरिपिंचताश्वन्न स्तोममप्तुर२ रजस्तुरं ।

वनप्रक्षमुदप्रुतं ॥ ३ ॥

एतमु त्यं मदच्युत२ सहस्रधारं वृषभं दिवोदुहं ।

विश्वा वसूनि बिभ्रतं ॥ ४ ॥

स सुन्वे यो वसूनां यो रायामानेता य इळानां ।

सोमो यः सुक्षितीनां ॥ ५ ॥

त्व२ ह्यं३ग दैव्य पवमान जनिमानि द्युमत्तमः ।

अमृतत्वाय घोपयन् ॥ ६ ॥

एपस्य धारया सुतो व्यावोरेभिःपवते मदिंतमः ।

क्रीळन्नूर्मिरपामिवा ॥ ७ ॥

य उस्रिया अपि या अंतरश्मनि निगी अकृंतदोजसा ।

अभि व्रजं तत्निपे गव्यमश्व्यं वर्म्मीव धृष्णवारुज ।

ओं वर्मीवधृष्णवारुज ॥ ८ ॥

स्व· ७ । उ· १ । धा· ४३ । चि ॥ दशति ॥ ९ ॥

॥ पवमानं समाप्तं ॥

॥ छंदोगप्रकृतिऋक् समाप्तः ॥

॥ प्रथमो ऽध्यायः समाप्तः ॥

॥ इतिछंदोग उत्तरसंहितारंभः ॥

॥ श्रीगणेशाय नमः ॥

ओम् उपास्मै गायता नरः पवमानायेंदवे।
अभि देवाँ२ इयक्षते।
अभि ते मधुना पयो॰थर्वाणो अशिश्रयुः।
देवं देवाय देवयु।
स नः पवस्व शं गवे शं जनाय शमर्वते।
शं२राजन्नोषधीभ्यः॥१॥ तौ॥
दविद्युतत्या रुचा परिष्टोभंत्या कृपा।
सोमाः शुक्रा गवाशिरः।
हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत्।
सीदंतो वनुषो यथा।
ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे।
पवस्व सूर्यो दृशे॥२॥ यि॥
पवमानस्य ते कवे वाजिंत्सर्गा असृक्षत।
अर्वंतो न श्रवस्यवः।
अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये।
अवावशंत धीतयः।
अच्छा समुद्रमिंदवो॰स्तं गावो न धेनवः।
अग्मंनृतस्य योनिमा॥३॥ कौ॥

अग्न आयाहि वीतये गृणानो हव्यदातये।
नि होता सत्सि बर्हिषी।
तं त्वा समिद्भिरंगिरो घृतेन वर्धयामसि।
बृहच्छोचायविष्ठ्य।
स नः पृथु श्रवाय्यमच्छा देव विवाससि।
बृहदग्ने सुवीर्यं॥४॥
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतं।
मध्वा रजांसि सुक्रतू।
उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः।
द्राघिष्ठाभिः शुचिव्रता।
गृणाना जमदग्निना योनावृतस्य सीदतं।
पातं सोममृतावृधा॥५॥ यि॥
आयाहि सुषुमाहित इंद्र सोमं पिबा इमम्।
एदं बर्हिः सदो मम।
आ त्वा ब्रह्मयुजा हरी वहतामिंद्रकेशिना।
उप ब्रह्माणि नः शृणु।
ब्रह्माणस्त्वायुजा वयं सोमपामिंद्र सोमिनः।
सुतावंतो हवामहे॥६॥ फी॥
इंद्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यं।
अस्य पातं धियेषिता।
इंद्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः।
अया पातमिमं सुतं।

इंद्रमग्निं कविछदा यज्ञस्य जूत्या वृणे।
ता सोमस्येह तृंपतां ॥७॥ ता ॥
उच्चा ते जातमंधसो दिवि सद्भूम्याददे।
उग्रं शर्म महि श्रवः।
स न इंद्राय यज्यवे वरुणाय मरुद्भ्यः।
वरिवो वित्परिस्रव।
एना विश्वान्यर्य आद्युम्नानि मानुषाणां।
सिषासंतो वनामहे ॥८॥ ठी ॥
पुनानः सोम धारयापो वसानो अर्षसि।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः।
दुहान ऊधर्दिव्यं मधुप्रियं प्रत्नं सधस्थमासदत्।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥९॥ लु ॥
प्र तु द्रव परिकोशं निषीदनृभिः पुनानो अभिवाजमर्ष।
अश्वं न त्वा वाजिनं मर्जयंतोछा बर्हीरशनाभिर्नयंति।
स्वायुधः पवते देव इंदुरशस्तिहा वृजना रक्षमाणः।
पिता देवानां जनिता सुदक्षो विष्टंभो दिवो धरुणः पृथिव्याः।
ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन।
स चिद्विवेद निहितं यदासामपीच्यंगुह्यं नाम गोनाम्॥१०॥हु॥
अभि त्वा शूर नोनुमो दुग्धा इव धेनवः।
ईशानमस्य जगतः स्वर्दृशमीशानमिंद्र तस्थुषः।
न त्वावां अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते।
अश्वायंतो मघवंनिंद्र वाजिनो गव्यंतस्त्वा हवामहे॥११॥यी॥

कया नश्चित्र आभुवदूती सदा वृधः सखा।
कया शचिष्ठयावृता।
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदंधसः।
दृढा चिदारुजे वसु।
अभीषुणः सखीनामविता जरितॄणाम्।
शत भवास्यूतये॥१२॥ टा॥
तं वोदस्ममृतीषहं वसोर्मंदानमंधसः।
अभि वत्सं न स्वसरेषु धेनव इंद्रं गीर्भिर्नवामहे।
द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसं।
क्षुमंतं वाजं शतिनं सहस्रिणं मक्षूगोमंतमीमहे॥१३॥ ही॥
तरोभिर्वो विदद्वसुमिंद्रं सबाध ऊतये।
बृहद्गायंतः सुतसोमे अध्वरे हुवे भरं न कारिणम्।
न यं दुध्रा वरंते न स्थिरा मुरो मदेषु शिप्रमंधसः।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यं॥१४॥ जु॥
स्वादिष्ठया मदिष्ठया पवस्व सोमधारया।
इंद्राय पातवे सुतः।
रक्षोहा विश्वचर्षणिरभियोनिमयोहते।
द्रोणे सधस्थमासदत्।
वरिवो धातमो भुवो मंहिष्ठो वृत्रहंतमः।
पर्षिराधो मघोनाम्॥१५॥ पौ॥
पवस्व मधुमत्तम इंद्राय सोम क्रतुवित्तमो मदः।
महि द्युक्षतमो मदः।

यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः।
स सुप्रकेतो अभ्यक्रमीदिषोछावाजं नैतशः॥ १६॥ प॥
इंद्रमछसुता इमे वृषणं यंतु हरयः।
श्रुष्टे जातास इंदव स्वर्विदः।
अयं भराय सानसिरिंद्राय पवते सुतः।
सोमो जैत्रस्य चेतति यथा विदे।
अस्येदिंद्रो मदेष्वा ग्राभंगृभ्णाति सानसिं।
वज्रं च वृषणं भरत्समप्सुजित्॥ १७॥ कि॥
पुरो जितीवो अंधसः सुताय मादयित्नवे।
अप श्वानश्श्नथिष्ट न सखायो दीर्घजिह्व्यम्।
यो धारया पावकया परिप्रस्यंदते सुतः।
इंदुरश्वो न कृत्व्यः।
तं दुरोषमभीनरः सोमं विश्वाच्या धिया।
यज्ञाय संत्वद्रयः॥ १८॥ यि॥
अभि प्रियाणि पवते च नो हितो नामानि यह्वो अधि येषु वर्धते।
आ सूर्यस्य बृहतो बृहन्नधिरथं विष्वंचमरुहद्विचक्षणः।
ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः।
दधाति पुत्रःपित्रोरपीच्याꣳनाम तृतीयमधिरोचनं दिवः।
अवद्युतानः कलशाꣳ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये।
अभी ऋतस्य दोहना अनुषताधि त्रिपृष्ठ उषसो विराजसि॥१९॥दि॥
यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे।
प्र प्रवयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषं।

ऊर्जो नपातꣳ स हि नायमस्मयुर्दाशेम हव्यदातये।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम्॥२०॥ यु॥
एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः।
एभिर्वर्धास इंदुभिः।
यत्र क्व च ते मनो दक्षं दधस उत्तरं।
तत्र योनिं कृणवसे।
न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते।
अथा दुवो वनवसे॥२१॥ यी॥
वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरंतोऽवस्यवः।
वज्रिञ्चित्रꣳ हवामहे।
उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत्।
त्वामिध्यवितारं ववृमहे सखाय इंद्र सानसिम्॥२२॥ च॥
अधा हींद्र गिर्वणः उप त्वा कामा ईमहे ससृग्महे।
उदेव ग्मंत उदभिः।
वार्णत्वा यव्याभिर्वर्धति शूर ब्रह्माणि।
वावृध्वाꣳसं चिदद्रिवो दिवेदिवे।
युंजंति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा।
इंद्र वाहा स्वर्विदा॥२३॥ यि॥

॥ इति अर्धमपाठकः॥

पांतमा वो अंधस इंद्रमभिप्रगायत।
विश्वासाहꣳ शतक्रतुं मꣳ हिष्ठं चर्षणीनाम्।

पुरूहूतं पुरुष्टुतं गाथान्या३ꣳसनश्रुतं।
इंद्र इति ब्रवीत न।
इंद्र इंनो महोनां दाता वाजानां नृतुः।
महाꣳ अभिज्ञ्वायमत्॥१॥ वा॥
प्र व इंद्राय मादनꣳ हर्यश्वाय गायत।
सखायः सोमपान्वे।
शꣳ सेदुक्थं सुदानव उत द्युक्षं यथा नरं।
चकृमा सत्यराधसे।
त्वं न इंद्रवाजयुस्त्वं गव्युः शतक्रतो।
त्वꣳहिरण्ययुर्वसो॥२॥ गौ॥
वयमु त्वा तदिदर्था इंद्र त्वायंतः सखायः।
कण्वा उक्थेभिर्जरंते।
न घेमन्यदापपन वज्रिं नमसो नविष्टौ।
तवेदु स्तोमैश्चिकेत।
इछंति देवाः सुन्वंतं न्वस्वप्नाय स्पृहयंति।
यंति प्रमादमतंद्राः॥३॥ पा॥
इंद्राय मद्वने सुतं परिष्टोभंतु नो गिरः।
अर्कमर्चंतु कारवः।
यस्मिन्विश्वा अधिश्रियो रणंति सप्तसꣳ सदः।
इंद्रꣳ सुते हवामहे।
त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत।
तमिद्वर्धंतु नो गिरः॥४॥ ला॥

अयं त इंद्र सोमो निपूतो अधि वर्हिषि।
एहिमस्य द्रवा पिव।
शाची गो शाचिपूजनायश्ं रणायते सुतः।
आखंडल प्रहूयसे।
यस्ते शृंगवृषो णपात्प्रणपात्कुंडपाय्यः।
न्यस्मिं दध्र आ मनः ॥ ५ ॥ दि ॥
आ तू न इंद्र क्षुमंतं चित्रं ग्राभश्ंसंगृभाय।
महा हस्ती दक्षिणेन।
विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघं।
तुविमात्रमवोभिः।
न हि त्वा शूरदेवा नमर्तासो दित्संतंभीमं न गां वारयंते॥६॥के॥
अभि त्वा वृषभासुते सुतश्ं सृजामि पीतये।
तृंपाव्यश्नूही मदं।
मा त्वा मूरा अविष्यवो मोपहस्वान आदभन्।
माकीं ब्रह्मद्विषं वनः।
इह त्वा गोपरीणसं महे मंदंतु राधसे।
सरो गौरो यथा पिव ॥ ७ ॥ या ॥
इदं वसो सुतमंधः पिवा सुपूर्णमुदरं।
अनाभयिन् ररिमा ते।
नृभिर्धौतः सुतो अश्नैरव्यावारैः परिपूतः।
अश्वो न निक्तो नदीषु।
तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणंतः।

इंद्र त्वास्मिन्त्सधमादे ॥ ८ ॥ यो ॥
इद्रꣳ ह्यन्वोजसा सुतꣳ राधानां पते ।
पिवा त्वऽस्य गिर्वणः ।
यस्ते अनुस्वधामसत्सुते नियछ तन्वं ।
स त्वा ममत्तु सोम्य ।
प्र ते अश्नोतु कुक्ष्योः प्रेंद्र ब्रह्मणा शिरः ।
प्र वाहू शूरराधसा ॥ ९ ॥ पी ॥
आ त्वेतानिषीदतेंद्रमभिप्रगायत ।
सखाय स्तोमवाहसः ।
पुरूतमं पुरूणामीशानं वार्याणां ।
इंद्रꣳ सोमे सचा सुते ।
स घानो योग आभुवत्स राये स पुरंध्या ।
गमद्वाजेभिरासनः ॥ १० ॥ टी ॥
योगे योगे तवस्तरं वाजेवाजे हवामहे ।
सखाय इंद्रमूतये ।
अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरं ।
यं ते पूर्वं पिता हुवे ।
आ घागमद्यदि श्रवत्सहस्रिणीभिरूतिभिः ।
वाजेभिरूप नो हवं ॥ ११ ॥ ला ॥
इंद्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यं ।
विदे वृधस्य दक्षस्य महाꣳहि षः ।
स प्रथमे व्योमनि देवानाꣳ सदने वृधः ।

सुपारः सुश्रवस्तमः समप्सुजित्।
तमु हुवे वाजसातय इंद्रं भराय शुष्मिणं।
भवा नः सुम्ने अंतमः सखा वृधे॥ १२॥ वा॥
एना वो अग्निं नमसोर्जोनपातमाहुवे।
प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम्।
स योजत अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः।
सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानां॥ १३॥ तु॥
प्रत्यु अदर्श्यायत्यूꣳछंती दुहिता दिवः।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी।
उदुस्रियाः सृजते सूर्यः सचा उद्यं नक्षत्रमर्चिवत्।
तवेदुषो व्यूषि सूर्यस्य च संभक्तेन गमेमहि॥ १४॥ वा॥
इमा उ वां दिविष्टय उस्रा हवंते अश्विना।
अयं वामह्वेऽवसे शचीवसू विशंविशꣳ हि गच्छथः।
युवं चित्रं ददथुर्भोजनं नरा चोदेथाꣳ सूनृतावते।
अर्वाग्रथꣳ समनसा नियच्छतं पिबतꣳ सोम्यं मधु॥ १५॥ चा॥
अस्यप्रत्नामनुद्युतꣳशुक्रं दुदुह्रे अह्रयः।
पयः सहस्रसामृषिं।
अयꣳ सूर्य इवोपदृगयꣳ सराꣳसि धावति।
सप्तप्रवत आदिवं।
अयं विश्वानि तिष्ठति पुनानो भुवनोपरि।
सोमो देवो न सूर्यः॥ १६॥ ते॥
एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः।

हरिः पवित्रे अर्षेति।
एष प्रत्नेन मन्मना देवो देवेभ्यस्परि।
कविर्विप्रेण वावृधे।
दुहानः प्रत्नमित्पयः पवित्रे परिषिच्यसे।
क्रंदं देवाꣳ अजीजनः ॥१७॥ हा॥
उपशिक्षापतस्थिषोभिय समाधेहि शत्रवे।
पवमान विदा रयिं।
उपोषु जातमप्तुरं।
उपास्मै गायता नरः ॥१८॥ वौ॥
प्र सोमासो विपश्चितोऽपोनयंत ऊर्मयः।
वनानि महिषा इव।
अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया।
वाजं गोमंतमक्षरन्।
सुता इंद्राय वायवे वरुणाय मरुद्भ्यः।
सोमा अर्षंतु विष्णवे ॥१९॥ वि॥
प्र सोम देववीतये सिंधुर्न पिप्ये अर्णसा।
अꣳशोः पयसा मदिरो न जागृविरछाकोशं मधुश्चुतं।
आहर्यंतो अर्जुनो अत्के अव्यतप्रियः सूनुर्न मर्ज्यः।
तमीꣳ हिन्वंत्यपसो यथा रथं नदीष्वागभस्त्योः ॥२०॥ रु॥
प्र सोमासो मदच्युतः श्रवसे नो मघोनां।
सुता विदथे अक्रमुः।
आदीꣳ हꣳसो यथा गणं विश्वस्यावीवशन्मतिं।

अत्योन गोभिरज्यते।
आर्दीं नितस्य योषणो हरिं हिन्वंत्यद्रिभिः।
इंदुमिंद्राय पीतये॥२१॥ ली॥
अया पवस्व देवयुरेभन् पवित्रं पर्येषिविश्वतः।
मधोर्धारा असृक्षत।
पवते हर्यतो हरिः।
प्रसुन्वानायांधसः॥२२॥ लि॥

॥ इतिप्रथमः प्रपाठकः ॥

पवस्व वाचो अग्रियः सोमश्चित्राभिरूतिभिः।
अभि विश्वानि काव्या।
त्वं समुद्रिया अपो ग्रियो वाच ईरयन्।
पवस्व विश्वचर्षणे।
तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे।
तुभ्यं धावंति धेनवः॥१॥ यी॥
पवस्वेंदो वृषा सुतः कृधी नो यशसो जने।
विश्वा अप द्विषो जहि।
यस्य ते सख्ये वयं सासह्याम पृतन्यतः।
तवेंदो द्युम्न उत्तमे।
या ते भीमान्यायुधातिग्मानि संति धूर्वणे।
रक्षा समस्य नो निदः॥२॥ ह॥
वृषा सोम द्युमां असि वृषा देव वृषव्रतः।

वृषा धर्माणि दधिषे।
वृषाणं वृष्णयश्च गवो वृषा वनं वृषा सुतः।
स त्वन्वृषन्वृषेदसि।
अश्वो न चक्रदो वृषा संगा इंदो समर्वतः।
वि नो राये दुरो वृधि॥ ३॥ लु॥
वृषा ह्यसि भानुना द्युमंतं त्वा हवामहे।
पवमानः स्वर्दृशं।
यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः।
द्रोणे सधस्थमश्नुषे।
आ पवस्व सुवीर्यं मंदमानः स्वायुध।
इहोष्विंदवागहि॥ ४॥ यो॥
पवमानस्य ते वयं पवित्रमभ्युंदतः।
सखित्वमा वृणीमहे।
ये ते पवित्रमूर्मयोऽभिक्षरंति धारया।
तेभिर्नः सोम मृळय।
स नः पुनान आभर रयिं वीरवतीमिषं।
ईशानः सोम विश्वतः॥ ५॥ ला॥
अग्निं दूतं वृणीमहे होतारं विश्ववेदसं।
अस्य यज्ञस्य सुक्रतुम्।
अग्निमग्निं हवीमभिः सदा हवंत विश्पतिं।
हव्यवाहं पुरुप्रियं।
अग्ने देवाँ इहावह जज्ञानो वृक्तबर्हिषे।

असि होता न ईड्यः ॥ ६ ॥ यौ ॥
मित्रं वयꣳ हवामहे वरुणꣳ सोमपीतये।
या जाता पूतदक्षसा।
ऋतेन या ऋता वृधा वृतस्य ज्योतिषस्पती।
ता मित्रावरुणा हुवे।
वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः।
करतां नः सुराधसः ॥ ७ ॥ वा ॥
इंद्रमिद्गाथिनो वृहदिंद्रमर्केभिरर्किणः।
इंद्रं वाणीरनूषत।
इंद्र इद्धर्योः सचा संमिश्ल आ वचो युजा।
इंद्रो वज्री हिरण्ययः।
इंद्र वाजेषु नोऽव सहस्रप्रधने षुच।
उग्र उग्राभिरूतिभिः।
इंद्रो दीर्घाय चक्षस आसूर्यꣳ रोहयद्दिवि।
वि गोभिरद्रिमैरयत् ॥ ८ ॥ खा ॥
इंद्र अग्ना नमो वृहत्सु वृक्तिमैरयामहे।
धिया धेना आवस्यवः।
ता हि शश्वंत ईडत इत्या विप्रास ऊतये।
सवाधो वाजसातये।
ता वां गीर्भिर्विपन्युवः प्रयस्वंतो हवामहे।
मेधसाता सनिष्यवः ॥ ९ ॥ हु ॥
वृषा पवस्व धारया मरुत्वते च मत्सरः।

विश्वा दधान ओजसा।
तं त्वा धर्तारमोण्योः पवमानस्वर्दृशं।
हिन्वे वाजेषु वाजिनं।
अया चित्तो विपानया हरिः पवस्व धारया।
युजं वाजेषु चोदय॥ १०॥ ट॥
वृषा शोणो अभिकनिक्रदद्गा नदयन्नेषि पृथिवीमुत द्यां।
इंद्रस्येव वग्नुराशृण्वं आजौ प्रचोदयन्नर्षसि वाचमेमां।
रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमंतमंशुं।
पवमान संतनिमेषि कृखन्निंद्राय सोम परिषिच्यमानः।
एवा पवस्व मदिरो मदायोदग्राभस्य नमयं वधस्नुं।
परिवर्णं भरमाणो रुशंतं गव्युर्नो अर्ष परि सोम सिक्तः॥ ११॥ रि॥
त्वामिद्धि हवामहे सातौ वाजस्य कारवः।
त्वा वृत्रेष्विंद्र सत्पतिन्नरस्त्वां काष्ठास्ववंतः।
स त्वं नश्चित्र वज्रहस्त धृष्णुया महस्तवानो अद्रिवः।
गामश्वं रथ्यमिंद्र संकिर सत्रा वाजं न जिग्युषे॥ १२॥ फु॥
अभि प्र वः सुराधसमिंद्रमर्च यथा विदे।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति।
शतानिकेव प्रजिगाति धृष्णुया हंति वृत्राणि दाशुषे।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः॥ १३॥ हि॥
त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः।
स इंद्र स्तोमवाहस इह श्रुध्युपस्वसरमागहि।
मत्स्वा सुशिप्रिन् हरिवस्तमीमहे त्वया भूषंति वेधसः।

तव श्रवा३ स्युपमान्युक्थसुतेष्विंद्र गिर्वणः ॥ १४ ॥ ल ॥
यस्ते मदो वरेण्यस्तेनापवस्वांधसा ।
देवावीरघश३ंसहा ।
जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवेदिवे ।
गोषातिरश्वसा असि ।
संमिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभिः ।
सीदंछ्येनो न योनिमा ॥ १५ ॥ चौ ॥
अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ।
समु प्रिया अनूषत गावो मदाय घृष्वयः ।
सोमासः कृण्वते पथः पवमानास इंदवः ।
य ओजिष्ठस्तमाभर पवमान श्रवाय्यं ।
यः पंच चर्षणिरभि रयिं येन वनामाहे ॥ १६ ॥ षु ॥
वृषा मतीनां पवते विचक्षणः सोमो अह्नां मतरीतोषसां दिवः ।
प्राणा सिंधूनां कलशा३ अचिक्रददिंद्रस्य हार्द्याविशन्मनीषिभिः ।
मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परिकोशा३ असिष्यदत् ।
त्रितस्य नाम जनयन्मधु क्षरन्निंद्रस्य वायु३ सख्याय वर्धयन् ।
अयं पुनान उषसो अरोचयदयं सिंधुभ्यो अभवदु लोककृत् ।
अयं त्रिः सप्त दुदुहान आशिर३ सोमो हृदे पवते चारु मत्सरः॥१७॥गी॥
एवाह्यसि वीरयुरेवाभूर उत स्थिरः ।
एवा ते राध्यं मनः ।
एवा रातिस्तुविमघ विश्वेभिर्धायि धातृभिः ।

अधाचिदिंद्र नः सचा।
मोषु ब्रह्मेव तंद्रयुर्भुवो वाजानां पते।
मत्स्वा सुतस्य गोमतः॥१८॥ ति॥
इंद्रं विश्वा अवीवृधंत्समुद्रव्यचसं गिरः।
रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिं।
सख्ये त इंद्र वाजिनो मा भेम शवसस्पते।
त्वामभिप्रनोनुमो जेतारमपराजितं।
पूर्वीरिंद्रस्य रातयो न विदस्यंत्यूतयः।
यदा वाजस्य गोमतस्तोतृभ्यो मꣳहते मघं॥१९॥ री॥

॥ इति अर्धप्रपाठकः॥ छ॥

एत असृग्रमिंदवस्तिरः पवित्रमाशवः।
विश्वान्यभिसौभगा।
विघ्नंतो दुरिता पुरु सुगा तोकाय वाजिनः।
त्मना कृण्वंतो अर्वतः।
कृण्वंतो वरिवो गवेभ्यर्षंति सुष्टुतिं।
इडामस्मभ्यꣳ संयतं॥१॥ या॥
राजा मेधाभिरीयते पवमानो मनावधि।
अंतरिक्षेण यातवे।
आ नः सोम सहो जुवो रूपं न वर्चसे भर।
सुष्वाणो देववीतये।
आ न इंदो शतग्विनं गवां पोषꣳ स्वश्व्यं।

वहा भगत्तिमूतये॥२॥ला॥
तं त्वा नृम्णानि बिभ्रतꣳ सधस्थेषु महो दिवः।
चारुꣳ सुकृत्यये महे।
संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदं।
शतं पुरो रुरुक्षणिं।
अतस्त्वा रयिरभ्ययद्राजानꣳ सुक्रतो दिवः।
सुपर्णो अव्यथी भरत्।
अधा हिन्वान इंद्रियं ज्यायो महित्वमानशे।
अभिष्टिकृद्विचर्षणिः।
विश्वस्मा ई स्वर्दृशे साधारणꣳ रजस्तुरं।
गोपामृतस्य विर्भरत्॥३॥हू॥
इषे पवस्व धारया मृज्यमानो मनीषिभिः।
इंदो रुचाभिगा इहि।
पुनानो वरिवस्कृध्यूर्जे जनाय गिर्वणः।
हरे सृजान आशिरं।
पुनानो देववीतय इंद्रस्य याहि निष्कृतं।
द्युतानो वाजिभिर्हितः॥४॥या॥
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा।
हव्यवाट् जुह्वास्यः।
यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति।
तस्य स्म प्राविता भव।
यो अग्निं देववीतये हविष्माꣳ आविवासति।

तस्मै पावक मृडय ॥५॥ रि॥
मित्रं हुवे पूतदक्षं वरुणं च रिशादसं।
धियं घृताचीं साधंता।
ऋतेन मित्रावरुणा ऋता वृधावृतस्पृशा।
क्रतुं वृहंतमाशाथे।
कवी नो मित्रा वरुणा तुविजाता उरुक्षया।
दक्षं दधाते अपसं॥६॥ व॥
इंद्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा।
मंदू समानवर्चसा।
आदह स्वधामनु पुनर्गर्भत्वमेरिरे।
दधाना नाम यज्ञियं।
वीडुचिदारुजत्नुभिर्गुहा चिदिंद्र वह्निभिः।
अविंद उस्रिया अनु॥७॥ ति॥
ता हुवे ययोरिदं पप्ने विश्वं पुराकृतं।
इंद्राग्नी न मर्धतः।
उग्रा विघनिना मृध इंद्राग्नी हवामहे।
ता नो मृडात ईदृशे।
हथो वृत्राण्यार्या हथो दासानि सत्पती।
हथो विश्वा अपद्विष॥८॥ पी॥
अभि सोमास आयवः पवंते मद्यं मदं।
समुद्रस्याधिविष्टपे मनीषिणो मत्सरासो मदच्युतः।
तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं वृहत्।

अर्षा मित्रस्य वरुणस्य धर्मणा प्रहिन्वान ऋतं बृहत्।
नृभिर्येमाणो हर्यतो विचक्षणो राजा देवः समुद्यः॥ ९॥ वु॥
तिस्रो वाच ईरयति प्रवह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषां।
गावो यंति गोपतिं पृछमानाः सोमं यंति मतयो वावशानाः।
सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृछमानाः।
सोमः सुत ऋच्यते पूयमानः सोमे अर्कास्त्रिष्टुभः संनवंते।
एवा नः सोम परिषिच्यमान आपवस्व पूयमानः स्वस्ति।
इंद्रमाविश बृहता मदेन वर्धया वाचं जनया पुरंधिं॥ १०॥ पी॥
यद्याव इंद्र ते शतंशतं भूमिरुत स्युः।
न त्वा वज्रिन् सहस्रं सूर्या अनु न जातमष्टरोदसी।
आ पप्राथ महिना वृष्णया वृषन्विश्वा शविष्ठ शवसा।
अस्मां अव मघवन्गोमति व्रजे वज्रिं चित्राभिरूतिभिः॥ ११॥ ली॥
वयं घ त्वा सुतावंत आपो न वृक्तबर्हिषः।
पवित्रस्य प्रस्रवणेषु वृत्रहन् परिस्तोतार आसते।
स्वरंति त्वा सुते नरो वसो निरेक उक्थिनः।
कदा सुतं तृषाण ओक आगमदिंद्र स्वब्दीव वंसगः।
कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणं।
पिशंगरूपं मघवन्विचर्षणे मक्षू गोमंतमीमहे॥ १२॥ छा॥
तरणिरित्सिषासति वाजं पुरंध्या युजा।
आ व इंद्रं पुरुहूतन्नमे गिरा नेमिं तष्टेव सुद्रुवम्।
न दुष्टुतिर्द्रविणोदेषु शस्यते न स्रेधंतः रयिर्नशत्।
सुशक्तिरिन्मघवं तुभ्यं मावते देष्णं यत्पार्ये दिवि॥ १३॥ यि॥

तिस्रो वाच उदीरते गावो मिमंति धेनवः।
हरिरेति कनिक्रदत्।
अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः।
मर्जयंतीर्दिवः शिशुं।
रायः समुद्राꣳ श्चतुरो॰स्मभ्यꣳ सोम विश्वतः।
आपवस्व सहस्रिणः॥ १४॥ टा॥
सुतासो मधुमत्तमाः सोमा इंद्राय मंदिनः।
पवित्रवंतो अक्षरं देवान् गछंतु वो मदाः।
इंदुरिंद्राय पवते इति देवासो अब्रुवन्।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसः।
सहस्रधारः पवते समुद्रो वाचमीखयः।
सोमस्पती रयीणाꣳ सखेंद्रस्य दिवेदिवे॥ १५॥ लि॥
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहंतः संतदाशत।
तपोष्पवित्रं विततं दिवस्पदे॰चंतो अस्य तंतवो व्यस्थिरन्।
अवंत्यस्य पवितारमाशवो दिवः पृष्ठमधिरोहंति तेजसा।
अरूरुचदूषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः॥१६॥टु॥
प्र मꣳ हिष्ठाय गायत ऋतान्वे बृहते शुक्रशोचिषे।
उपस्तुतासो अग्नये।
आ वꣳ सते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः।
कुविन्नो अस्य सुमतिर्भवीयस्यछा वाजेभिरागमत्॥ १७॥ या॥

तं ते मदं गृणीमसि वृषणं पृक्षु सासहिं।
उ लोककृत्नुमद्रिवो हरिश्रियम्।
येन ज्योतीꣳ ष्यायवे मनवे च विवेदिथ।
मंदानो अस्य बर्हिषो विराजसि।
तदद्य चित्त उक्थिनोऽनुष्टुवंति पूर्वथा।
वृषपत्नीरपो जया दिवेदिवे॥ १८॥ ह॥
श्रुधी हवं तिरश्च्या इंद्र यस्त्वा सपर्यति।
सुवीर्यस्य गोमतो रायस्पूर्धि महाꣳ असि।
यस्त इंद्र नवीयसीं गिरं मंद्रामजीजनत्।
चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीं।
तमु ष्टवाम यं गिर इंद्रमुक्थानि वावृधुः।
पुरूण्यस्य पौꣳस्या सिषासंतो वनामहे॥ १९॥ फा॥

॥ इतिद्वितीयः प्रपाठकः॥

प्र त आश्विनीः पवमान धेनवो दिव्या असृग्रन्पयसा धरीमणि।
प्रांतरिक्षात् स्थाविरीस्ते असृक्षत ये त्वा मृजंत्यृषिषाण वेधसः।
उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परीयंति केतवः।
यदी पवित्रे अधिमृज्यते हरिः सत्तानि योनौ कलशेषु सीदति।
विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परियंति केतवः।
व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसि॥ १॥ वी॥
पवमानो अजीजनद्दिवश्चित्रं न तन्यतुं।
ज्योतिर्वैश्वानरं बृहत्।

पवमान रसस्तव मदो राजन्नदुच्छुनः।
वि वारमव्यमर्षति।
पवमानस्य ते रसो दक्षो विराजति द्युमान्।
ज्योतिर्विश्वश् स्वर्द्दशे॥२॥ पा॥
प्रयज्ञावो न भूर्णयस्त्वेषा अयासो अक्रमुः।
घ्नंतः कृष्णामप त्वचम्।
सुवितस्य वनामहे ऽतिसेतुं दुराय्यं।
साह्याम दस्युमव्रतं।
शृखे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः।
चरंति विद्युतो दिवि।
आपवस्व महीमिषं गोमदिंदो हिरण्यवत्।
अश्ववत्सोम वीरवत्।
पवस्व विश्वचर्षण आ महीरोदसी पृण।
उषाः सूर्यो न रश्मिभिः।
परि नः शर्मयंत्याधारया सोम विश्वतः।
सरारसेव विष्टपं॥३॥ भी॥
आशुरर्ष वृहन्मते परि प्रियेण धाम्ना।
यत्रा देवा इति ब्रुवन्।
परिष्कृणवन्ननिष्कृतं जनाय यातयन्निषः।
वृष्टिं दिवः परिस्रव।
अयश् स यो दिवस्परि रघुयामा पवित्र आ।
सिंधोरूर्मा व्यक्षरत्।

सुत एति पवित्र आ त्विषिं दधान ओजसा।
विचक्षाणो विरोचयन्।
आविवासन्परावतो अथो अर्वावतः सुतः।
इंद्राय सिच्यते मधु।
समीचीना अनूषत हरिꣳ हिन्वंत्यद्रिभिः।
इंदुमिंद्राय पीतये॥४॥गी॥
हिन्वंति सूरमुस्रयः स्वसारो जामयस्पतिं।
महामिंदुं महीयुवः।
पवमान रुचारुचा देवदेवेभ्यः सुतः।
विश्वावसून्याविश।
आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः।
इषे पवस्व संयतं॥५॥ह॥
जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षसुविताय नव्यसे।
घृतप्रतीको वृहता दिविस्पृशा द्युमद्विभाति भारतेभ्यः शुचिः।
त्वामग्ने अंगिरसो गुहाहितमन्वविंदंछिश्रियाणं वनेवने।
स जायसे मथ्यमानः सहो महत्वामाहुः सहसस्पुत्रमंगिरः।
यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिंधते।
इंद्रेण देवैः सरथꣳ स वर्हिषी सीदं नि होता यजथाय सुक्रतुः॥६॥वे॥
अयं वा मित्रावरुणा सुतः सोम ऋतावृधा।
ममेदिह श्रुतꣳ हवं।
राजानावनभिद्रुहा ध्रुवे सदस्युत्तमा।
सहसस्थूण आशाते।

ता सम्राजा घृतासुति आदित्या दानुनस्पति।
सचेते अनवह्वरं॥७॥ पि॥
इंद्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः।
जघान नवतीर्नव।
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितं।
तद्विदच्छर्यणावति।
अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्।
इत्था चंद्रमसो गृहे।८॥ ठी॥
इयं वामस्य मन्मन इंद्राग्नि पूर्व्यस्तुतिः।
अभ्राद्वृष्टिरिवाजनि।
शृणुतं जरितुर्हवमिंद्राग्नी वनतं गिरः।
ईशाना पिप्यतं धियः।
मा पापत्वाय नो नरेंद्राग्नी माभिशस्तये।
मा नो रीरधतं निदे॥९॥ चा॥
पवस्व दक्षसाधनो देवेभ्यः पीतये हरे।
मरुद्भ्यो वायवे मदः।
सं देवैश्शोभते वृषा कविर्योनावधि प्रियः।
पवमानो अदाभ्यः।
पवमान धिया हितोऽभियोनिं कनिक्रदत्।
धर्मणा वायुमारुहः॥१०॥ ख॥
तवाहꣳ सोम रारणसख्य इंदो दिवेदिवे।
पुरूणि बभ्रो निचरंति मामवपरिधीꣳ रतिताꣳ इहि।

तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊधनि।
घृणा तपंतमतिसूर्यं परः शकुना इव पप्तिम॥ ११॥ ति॥
पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः।
शुंभंति विप्रं धीतिभिः।
आ योनिमरुणो रुहद्गमदिंद्रो वृषा सुतं।
ध्रुवे सदसि सीदतु।
नू नो रयिं महामिंदोऽस्मभ्यं सोम विश्वतः।
आपवस्व सहस्रिणं॥ १२॥॥ चा॥
पिबा सोममिंद्र मंदतु त्वा यं ते सुषाव हर्यश्वाद्रिः।
सोतुर्बाहुभ्यां सुयतो नार्वा।
यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि।
स त्वामिंद्र प्रभूवसो ममत्तु।
बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिं।
इमा ब्रह्म सधमादे जुषस्व॥ १३॥ वा॥
विश्वाः पृतना अभिभूतरन्नरः सजूस्ततक्षुरिंद्रं जजनुश्च राजसे।
क्रत्वे वरे स्थे मन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम्।
नेमिं नमंति चक्षसा मेषं विप्रा अभि स्वरे।
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः।
समु रेभासो अस्वरन्निंद्रं सोमस्य पीतये।
स्वः पतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः॥ १४॥ ची॥
यो राजा चर्षणीनां याता रथेभिरध्रगुः।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे।

इंद्रं तं॑ शुंभपुरुहुन्मन्नवसे यस्य द्विता विधर्तरि।
हस्तेन वज्रः प्रतिधायि दर्शतो महां देवो न सूर्यः ॥ १५ ॥ चि॥
परिप्रिया दिवः कविर्वयांसि नप्त्योर्हितः।
स्वानैर्याति कविक्रतुः।
स सूनुर्मातरा शुचिर्जातो जाते अरोचयत्।
महान्मही ऋतावृधा।
प्र प्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः।
वीत्यर्ष पनिष्टये ॥ १६ ॥ रि।
त्वं ह्यङ्गदैव्य पवमान जनिमानि द्युमत्तमः।
अमृतत्वाय घोषयन्।
येना नवग्वा दध्यङ् अपोर्नुते येन विप्रास आपिरे।
देवानां सुम्ने अमृतस्य चारुणो येन श्रवांस्याशत॥१७॥ पौ॥
सोमः पुनान ऊर्मिणाव्यं वारं विधावति।
अग्रे वाचः पवमानः कनिक्रदत्।
धीभिर्मृजंति वाजिनं वने क्रीडंतमत्यविं।
अभि त्रिपृष्ठं मतयः समस्वरन्।
असर्जि कलशां अभि मीढ्वांत्सप्तिर्न वाजयुः।
पुनानो वाचं जनयन्नसिष्यदत् ॥ १० ॥ फा॥
सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः।
ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां।
श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्।

प्रावीविपद्वाच ऊर्मिं न सिंधुर्गिरस्तोमान्पवमानो मनीषाः।
अंतः पश्यन्वृजनेमावराण्यातिष्ठति वृषभो गोषु जानन्॥ १९॥ फू॥
अग्निं वो वृधंतमध्वराणां पुरूतमं।
अच्छा नप्त्रे सहस्वते।
अयं यथा न आभुवत्त्वष्टा रूपेवतक्ष्या।
अस्य क्रत्वा यशस्वतः।
अयं विश्वा अभिश्रियोऽग्निर्देवेषु पत्यते।
आ वाजैरुप नो गमत्॥ २०॥ डा॥
इममिंद्र सुतं पिब ज्येष्ठममर्त्यं मदं।
शुक्रस्य त्वाभ्यक्षरं धारा ऋतस्य सादने।
नकिष्ट्वद्रथीतरो हरी यदिंद्र यछसे।
नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे।
इंद्राय नूनमर्चतोक्थानि च ब्रवीत न।
सुता अमत्सुरिंदवो ज्येष्ठं नमस्यता सहः॥ २१॥ र॥
इंद्र जुषस्व प्रवहायाहि शूर हरिह।
पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय।
इंद्र जठरं नव्यं न पृणस्व मधोर्दिवो न।
अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अस्थुः।
इंद्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न।
बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य॥ २२॥ ङ॥

॥ इति अर्ध प्रपाठकः॥

गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इंदो भुवनेष्वर्पितः।
त्वꣳ सुवीरो असि सोम विश्ववित्तं त्वा नरं उप गिरेम आसते।
त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता विधावसि।
स नः पवस्व वसुमद्धिरण्यवद्वयꣳ स्याम भुवनेषु जीवसे।
ईशान इमा भुवनानि ईयसे युजान इंदो हरितः सुपर्ण्यः।
तास्ते क्षरंतु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठंतु कृष्टयः॥१॥खी॥
पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत।
सूर्यस्येव न रश्मयः।
केतुं कृण्वं दिवस्परि विश्वा रूपाभ्यर्षसि।
समुद्रः सोम पिन्वसे।
जज्ञानो वाचमिष्यसि पवमान विधर्मणि।
क्रंदं देवो न सूर्यः॥२॥पा॥
प्र सोमासो अधन्विषुः पवमानास इंदवः।
श्रीणानो अप्सु वृंजते।
अभि गावो अधन्विषु रापो न प्रवता यतीः।
पुनाना इंद्रमाशत।
प्र पवमान धन्वसि सोमेंद्राय मादनः।
नृभिर्यतो विनीयसे।
इंदो यदद्रिभिः सुतः पवित्रं परिदीयसे।
अरमिंद्रस्य धाम्ने।
त्वꣳ सोम नृमादनः पवस्व चर्षणीधृतिः।
सस्निर्यो अनुमाद्यः।

पवस्व वृत्रहंतम उक्थेभिरनुमाद्यः।
शुचिः पावको अद्भुतः।
शुचिः पावक उच्यते सोमः सुतः समधुमान्।
देवा वीरघशꣳस हा॥३॥ है॥
प्र कविर्देववीतये ऽव्या वारेभिरव्यत।
साह्वान्विश्वा अभिस्पृधः।
स हि ष्मा जरितृभ्य आवाजं गोमंतमिन्वति।
पवमानः सहस्रिणम्।
परि विश्वानि चेतसा मृज्यसे पवसे मती।
स नः सोम श्रवो विदः।
अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवꣳ रयिं।
इषꣳ स्तोतृभ्य आभर।
त्वꣳ राजेव सुव्रतो गिरः सोमाविवेशिथ।
पुनानो वह्ने अद्भुत।
स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः।
सोमश्चमूषु सीदति।
क्रीडुर्मखो न मꣳहयुः पवित्रꣳ सोम गच्छसि।
दधत्स्तोत्रे सुवीर्यं॥४॥ कौ॥
यवंयवं नो अंधसा पुष्टंपुष्टं परिस्रव।
विश्वा च सोम सौभगा।
इंदो यथा तव स्तवो यथा ते जातमंधसः।
निबर्हिषि प्रिये सदः।

उत नो गोविदश्ववित्पवस्व सोमांधसा।
मक्षूतमेभिरहभिः।
यो जिनाति न जीयते हंति शत्रुमभीत्य।
स पवस्व सहस्रजित्॥५॥ हि॥
यास्ते धारा मधुश्चुतो॰सृग्रमिंद ऊतये।
ताभिः पवित्रमासदः।
सो अर्षेंद्राय पीतये तिरो वाराण्यव्यया।
सीदन्नृतस्य योनिमा।
त्वꣳ सोम परिस्रवः स्वादिष्ठो अंगिरोभ्यः।
वरिवोवित् घृतं पयः॥६॥ हि॥
तव श्रियो वर्ष्यस्येव विद्युतो॰ग्नेश्चिकित्र उषसामिवेतयः।
यदोषधीरभिसृष्टो वनानी च परि स्वयं चिनुषे अन्नमासनि।
वातोपजूत इषितो वशाꣳ अनुतृषु यदन्ना वेविषद्वितिष्ठसे।
आ ते यतंते रथ्यो३यथा पृथक् शर्द्धाꣳस्यग्ने अजरस्य धक्षतः।
मेधाकारं विदथस्य प्रसाधनमग्निꣳ होतारं परिभूतरं मतिं।
त्वामर्भस्यहविषः समानमित्वां महो वृणते नान्यं त्वत्॥७॥ वु॥
पुरूरुणा चिध्यस्त्यवो नूनं वां वरुण।
मित्र वꣳसि वाꣳ सुमतिं।
तावाꣳ सम्यगद्रूह्वाणेषमश्याम धामच।
वयं वां मित्रा स्याम।
पातं नो मित्रा पायुभिरुत त्रायेथाꣳ सुत्रात्रा।
साह्याम दस्यूं तनूभिः॥८॥

उज्जिघन्नोजसा सह पीत्वा शिप्रे अवेपयः।
सोममिंद्र चमूसुतं।
अनु त्वा रोदसी उभे स्पर्धमानमददेतां।
इंद्र यद्दस्युहाभवः।
वाचमष्टापदीमहं नवस्रक्तिमृता वृधं।
इंद्रात्परितन्वं ममे॥९॥ ह्री॥
इंद्राग्नि युवामिमे३ऽभि स्तोमा अनूषत।
पिबतश् शंभुवा सुतं।
या वाश् संति पुरुस्पृहो नियुतो दाशुषे नरा।
इंद्राग्नी ताभिरागतं।
ताभिरागछतं नरोपेदश् सवनश् सुतं।
इंद्राग्नी सोमपीतये॥१०॥ हा॥
अर्षा सोम द्युमत्तमोऽभिद्रोणानि रोरुवत्।
सीदन्योनौ वनेष्वा।
अप्सा इंद्राय वायवे वरुणाय मरुद्भ्यः।
सोमा अर्षंतु विष्णवे।
इषं तोकाय नो दधदस्मभ्यश् सोमविश्वतः।
आपवस्व सहस्रिणं॥११॥ ला॥
सोम उष्वाणः सोतृभिरधिष्णुभिरवीनाम्।
अश्वयेव हरितायाति धारया मंद्रयायाति धारया।
अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः।
समुद्रं न संवरणान्यग्मन्मंदी मदाय तोशते॥१२॥ फ॥

यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु।
तं नः पुनान आभरः।
वृषा पुनान आयूंषि स्तनयन्नधि बर्हिषि।
हरिः संयोनिमासदः।
युवं हि स्थः स्वःपती इंद्रश्च सोम गोपती।
ईशाना पिप्यतं धियः॥१३॥ पु॥
इंद्रो मदाय वावृधे शवसे वृत्रहा नृभिः।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्रनोऽविषत्।
असि हि वीर सेन्योऽसि भूरि पराददिः।
असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु।
यदुदीरत आजयः॥१४॥ खु॥
स्वादोरित्था विषूवतः।
ता अस्य पृशनायुवः सोमं श्रीणंति पृश्नयः।
प्रिया इंद्रस्य धेनवो वज्रं हिन्वंति सायकं वस्वीरनु स्वराज्यं।
ता अस्य नमसा सहः सपर्यंति प्रचेतसः।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम्॥१५॥व॥
असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः।
श्येनो न योनिमासदत्।
शुभ्रमंधो देववातमप्सु धौतं नृभिः सुतं।
स्वदंति गावः पयोभिः।
आदीमश्वं न हेतारमशूशुभन्नमृताय।
मधो रसं सधमादे॥१६॥ चु॥

अभिद्युम्नं बृहद्यश इषस्पते दीदिहि देव देवयुम्।
विकोशं मध्यमं युव।
आवच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः।
वृष्टिं दिवः पवस्व रीतिमपो जिन्वन् गविष्टये धियः॥१७॥डि॥
प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम्।
विश्वा परिप्रिया भुवदध द्विता।
उप त्रितस्य पाष्यो३ऽरभक्त यद्गुहापदं।
यज्ञस्य सप्तधामभिरध प्रियं।
त्रीणि त्रितस्य धारया पृष्ठेष्वेरयद्रयिं।
मिमीते अस्य योजना वि सुक्रतुः॥१८॥री॥
पवस्व वाजसातये पवित्रे धारया सुतः।
इंद्राय सोम विष्णवे देवेभ्यो मधुमत्तरः।
त्वा३ रिहंति धीतयो हरिं पवित्रे अद्रूहः।
वत्सं जातं न मातरः पवमाना विधर्मणि।
त्वं द्यां च महिव्रत पृथिवीं चातिजभ्रिषे।
प्रति द्रापिममुंचथाः पवमान महित्वना॥१९॥ता॥
इंदुर्वाजी पवते गोन्योधा इंद्रे सोमः सह इन्वन्मदाय।
हंति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा।
अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः।
इंदुरिंद्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय।
अभि व्रतानि पवते पुनानो देवो देवान्स्वेन रसेन पृंचन्।
इंदुर्धर्माण्यृतुथावसानो दशक्षिपो अव्यत सानो अव्ये॥२०॥पी॥

अभ्यर्थानपच्युतो वाजिन् त्समत्सु सासहिः।
अथा नो वस्यसस्कृधि।
त्वां यज्ञैरवीवृधन्पवमान विधर्मणि।
अथा नो वस्यसस्कृधि।
रयिं नश्चित्रमश्विनमिंदो विश्वायुमाभर।
अथा नो वस्यसस्कृधि॥४॥चा॥
तरत्स मंदी धावति धारा सुतस्यांधसः।
तरत्स मंदी धावति।
उस्रा वेदवसूनां मर्तस्य देव्यवसः।
तरत्स मंदी धावति।
ध्वस्रयोः पुरुषंत्योरा सहस्राणि दद्महे।
तरत्स मंदी धावति।
आ ययोस्त्रिं॰ शतं तना सहस्राणि च दद्महे।
तरत्स मंदी धावति॥५॥ह॥
एते सोमा असृक्षत गृणानाः श्रवसे महे।
मदिंतमस्य धारया।
अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि।
सनद्वाजः परिस्रव।
उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः।
गृणानो जमदग्निना॥६॥वि॥
इमं॰ स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया।
भद्रा हि नः प्रमतिरस्यसं॰ सद्यग्ने सख्ये मारिषामा वयं तव।

भरामेध्मं कृणवामा हवींऽषि ते चितयंतः पर्वणापर्वणा वयं।
जीवातवे प्रतराऽं साधया धियोऽग्ने सख्ये मारिषामा वयं तव।
शकेम त्वा समिधऽं साधया धियस्त्वे देवा हविरदंत्याहुतं।
त्वमादित्याऽआवह तान् ह्यूऽश्मस्यग्ने सख्ये मारिषामा वयं तव॥७॥ठौ॥
प्रतिवाऽं सूर उदिते मित्रं गृणिषे वरुणं।
अर्यमणऽं रिशादसं।
राया हिरण्यया मतिरियमवृकाय शवसे।
इयं विप्रा मेधसातये।
ते स्याम देव वरुण ते मित्रसूरिभिः सह।
इषऽं स्वश्चधीमहि॥८॥हा॥
भिंधि विश्वा अपद्विषः परिबाधो जही मृधः।
वसु स्पार्हं तदाभर।
यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति।
वसु स्पार्हं तदाभर।
यद्वीडाविंद्र यत्स्थिरे यत्पर्शाने पराभृतम्।
वसु स्पार्हं तदाभर॥९॥चू॥
यज्ञस्य हि स्थ ऋत्विजा सस्नि वाजेषु कर्मसु।
इंद्राग्नी तस्य बोधतं।
तोशासा रथयावाना वृत्रहणापराजिता।
इंद्राग्नी तस्य बोधतं।
इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः।
इंद्राग्नी तस्य बोधतं॥१०॥टा॥

इंद्रायेंदो मरुत्वते पवस्व मधुमत्तमः।
अर्कस्य योनिमासदं।
तं त्वा विप्रा वचोविदः परिष्कृण्वंति धर्णसिं।
सं त्वा मृजंत्यायवः।
रसं ते मित्रो अर्यमा पिबंतु वरुणः कवे।
पवमानस्य मरुतः॥११॥ ल॥
मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि।
रयिं पिशंगं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि।
पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने।
देवानाꣳ सोम पवमान निष्कृतं गोभिरंजानो अर्षसि॥१२॥ति॥
एतमुत्यं दश क्षिपो मृजंति सिंधुमातरं।
समादित्येभिरख्यत।
समिंद्रेणोत वायुना सुत एति पवित्र आ।
सꣳ सूर्यस्य रश्मिभिः।
स नो भगाय वायवे पूष्णे पवस्व मधुमान्।
चारुर्मित्रे वरुणे च॥१३॥ टि॥
रेवतीर्णः सधमाद इंद्रे संतु तुविवाजाः।
क्षुमंतो याभिर्मदेम।
आ घ त्वावान्त्मना युक्तस्तोतृभ्यो धृष्णवीयानः।
ऋणोरक्षं न चक्र्योः।
आयद्दुवः शतक्रतवाकामं जरितृणाम्।
ऋणोरक्षं न शचीभिः॥१४॥ ठी॥

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे।
जुहूमसि द्यविद्यवि।
उप नः स वनागहि सोमस्य सोमपाः पिब।
गोदा इद्रेवतो मदः।
अथा ते अंतमानां विद्याम सुमतीनां।
मा नो अतिख्य आगहि ॥ १५ ॥ कौ ॥
उभे यदिंद्र रोदसी आपप्राथोषा इव।
महांतं त्वा महीनां संम्राजं चर्षणीनां।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्।
दीर्घं ह्यंकुशं यथा शक्तिं बिभर्षि मंतुमः।
पूर्वेण मघवन्पदा वयामजो यथा यमः।
देवीजनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्।
अव स्म दुर्हणायतो मर्तस्य तनुहि स्थिरं।
अधस्पदं तमीं कृधि यो अस्माॅं अभिदासति।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १६ ॥ यौ ॥
परिस्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्।
मदेषु सर्वधा असि।
त्वं विप्रस्त्वं कविर्मधुप्रजातमंधसः।
मदेषु सर्वधा असि।
त्वे विश्वे सजोषसो देवासः पीतिमाशत।
मदेषु सर्वधा असि ॥ १७ ॥ ला ॥
स सुन्वे यो वसूनां यो रायामानेता य इळानाम्।

सोमो यः सुक्षितीनाम्।
यस्य त इंद्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः।
आ येन मित्रा वरुणा करामह एंद्रमवसे महे॥ १८॥ लि॥
तं वः सखायो मदाय पुनानमभिगायत।
शिशुन्न हव्यैः स्वदयंत गूर्त्तिभिः।
संवत्स इव मातृभिरिंदुर्हिन्वानो अज्यते।
देवावीर्मधो मतिभिः परिष्कृतः।
अयं दक्षाय साधनो यश्ं शर्धाय वीतये।
अयं देवेभ्यो मधुमत्तरः सुतः॥ १९॥ यि॥
सोमाः पवंत इंदवोऽस्मभ्यं गातुवित्तमाः।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः।
ते पूतासो विपश्चितः सोमा सोदध्याशिरः।
सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते।
सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि।
इषमस्मभ्यमभितः समस्वरन्वसुविदः॥ २०॥ वा॥
अया पवा पवस्वैना वसूनि मांश्चत्व इंदो सरसि प्रधन्व।
ब्रध्नश्चिद्यस्य वातो न जुतिं पुरुमेधाश्चित्तकवे नरं धात्।
उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे।
षष्टिंश् सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय।
महीमे अस्य वृष नाम शूषे मांश्चत्वे वा पृशने वा वधत्रे।
अस्वापयं निगुत स्नेहयच्चापामित्रांश् अपाचितो अचेतः॥ २१॥ कि॥
अग्ने त्वं नो अंतम उत त्राता शिवो भुवो वरूथ्यः।

वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः॥ २२॥ वा॥
इमा नु कं भुवना सीषधेमेंद्रश्च विश्वे च देवाः।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिंद्रः सह सीषधातु।
आदित्यैरिंद्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत्॥ २३॥ छा॥
प्रवोचोंपा॥ २४॥ य॥

॥ इति अर्धप्रपाठकः॥

प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमविवक्ति।
महिव्रतः शुचिबंधुः पावकः पदा वराहो अभ्येति रेभन्।
प्रहꣳसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः।
अंगोषिणं पवमानꣳ सखायो दुर्मर्षं वाणं प्रवदंति साकं।
स योजत उरुगायस्य जूतिं वृथा क्रीडंतं मिमते न गावः।
परीणसं कृणुते तिग्मशृंगो दिवा हरिर्ददृशे नक्तमृज्रः॥ १॥ डी॥
प्र स्वानासो रथा इवार्वंतो न श्रवस्यवः।
सोमासो राये अक्रमुः।
हिन्वानासो रथा इव दधन्विरे गभस्त्योः।
भरासः कारिणामिव।
राजानो न प्रशस्तिभिः सोमासो गोभिरंजते।
यज्ञो न सप्तधातृभिः।
परि स्वानास इंदवो मदाय बर्हणा गिरा।
मधो अर्षंति धारया।

अपानासो विवस्वतो जिन्वंत उषसो भगं।
सूरा अण्वं वितन्वते।
अपद्वारा मतीनां प्रत्ना ऋण्वंति कारवः।
वृष्णो हरस आयवः।
समीचीनास आशत होतारः सप्तजानयः।
पदमेकस्य पिप्रतः।
नाभा नाभिं न आददे चक्षुषा सूर्यं दृशे।
कवेरपत्यमादुहे।
अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितं।
सूरः पश्यति चक्षसा॥२॥ ती॥
असृग्रमिंदवः पथा धर्मन्नृतस्य सुश्रियः।
विदाना अस्य योजना।
प्र धारा मधो अग्रियो महिरपो विगाहते।
हविर्हविःषु वंद्यः।
प्रयुजा वाचो अग्रियो वृषो अचिक्रदद्वने।
सद्माभिसत्यो अध्वरः।
परियत्काव्या कविर्नृम्णा पुनानो अर्षेति।
स्ववाजी सिषासति।
पवमानो अभिस्पृधो विशो राजेव सीदति।
यदीमृण्वंति वेधसः।
अव्या वारे परि प्रियो हरिर्वनेषु सीदति।
रेभो वनुष्यते मती।

स वायुमिंद्रमश्विना साकं मदेन गछति।
रणा यो अस्य धर्मणा।
आ मित्रे वरुणे भगे मधोः पवंत ऊर्मयः।
विदाना अस्य शक्मभिः।
अस्मभ्यꣳ रोदसी रयिं मध्वो वाजस्य सातये।
श्रवो वसूनि संजितं॥३॥ घो॥
आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे।
पांतमापुरुस्पृहं।
आमंद्रमावरेण्यमाविप्रमामनीषिणं।
पांतमापुरुस्पृहं।
आरयिमासुचेतुनमासुक्रतो तनूष्वा।
पांतमापुरुस्पृहं॥४॥ चा॥
मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्।
कविꣳ संम्राजमतिथिं जनानामासन्नः पात्रं जनयंत देवाः।
त्वां विश्वे अमृत जायमानꣳ शिशुं न देवा अभिसंनवंते।
तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः।
नाभिं यज्ञानाꣳ सदनꣳ रयीणां महामाहावमभिसंनवंत।
वैश्वानरꣳ रथ्यमध्वराणां यज्ञस्य केतुं जनयंत देवाः॥५॥ कु॥
प्र वो मित्राय गायत वरुणाय विपा गिरा।
महिक्षत्रावृतं बृहत्।
संम्राजा या घृतयोनि मित्रश्चोभा वरुणश्च।
देवा देवेषु प्रशस्ता।

ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य।
महि वां क्षत्रं देवेषु॥६॥र॥
इंद्रायाहि चित्रभानो सुता इमे त्वायवः।
अण्वीभिस्तना पूतासः।
इंद्रायाहि धियेषितो विप्रजूतः सुतावतः।
उप ब्रह्माणि वाघतः।
इंद्रायाहि तूतुजान उप ब्रह्माणि हरिवः।
सुते दधिष्वनश्चनः॥७॥ही॥
तमीडिष्व यो अर्चिषा वना विश्वा परिष्वजत्।
कृष्णा कृणोति जिह्वया।
य इद्ध आविवासति सुम्नमिंद्रस्य मर्त्यः।
द्युम्नाय सुतरा अपः।
तानो वाजवतीरिष आशुन्पिपृतमर्वतः।
एंद्रमग्निं च वोढवे॥८॥य॥
प्रो अयासीदिंदुरिंद्रस्य निष्कृतं सखा सख्युर्न प्रमीनाति संगिरं।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा।
प्र वो धियो मंद्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः।
हरिं क्रीडंतमभ्यनूषत स्तुभो भि धेनवः पयसेदशिश्रयुः।
आ नः सोम संयतं पिप्युषीमिषमिंदो पवस्व पवमान ऊर्मिणा।
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यं॥९॥ठि॥
नकिष्टं कर्मणा नशद्यश्चकार सदावृधं।
इंद्रन्न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा।

अषाढमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः।
सं धेनवो जायमाने अनोनवुर्द्यावः क्षामिरनोनवुः॥१०॥ही॥
सखाय आनिषीदत पुनानाय प्रगायत।
शिशुन्न यज्ञैः परिभूषत श्रिये।
समीं वत्सं न मातृभिः सृजता गयसाधनं।
देवाव्यंश्मदमभि द्विशवसं।
पुनाता दक्षसाधनं यथा शर्धाय वीतये।
यथा मित्राय वरुणाय शंतमं॥११॥पि॥
प्र वाज्यक्षाः सहस्रधारस्तिरः पवित्रं विवारमव्यं।
स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः।
प्र सोम याहींद्रस्य कुक्षा नृभिर्येमाणो अद्रिभिः सुतः॥१२॥पु॥
ये सोमासः परावतीये अर्वावति सुन्विरे।
ये वादः शर्येणावति।
य आर्जिकेषु कृत्वसु ये मध्ये पस्त्यानां।
ये वा जनेषु पंचसु।
ते नो वृष्टिं दिवस्परि पवंतामा सुवीर्यं।
स्वाना देवास इंदवः॥१३॥चि॥
आ ते वत्सो मनो यमत्परमाच्चित्सधस्तात्।
अग्ने त्वां कामये गिरा।
पुरुत्रा हि सदृङ् असि दिशो विश्वा अनु प्रभुः।
समत्सु त्वा हवामहे।
समत्स्वग्निमवसे वाजयंतो हवामहे।

वाजेषु चित्रराधसं॥ १४॥ ठा॥
त्वं न इंद्राभर ओजो नृम्णꣳ शतक्रतो विचर्षणे।
आवीरं पृतनासहं।
त्वꣳ हि नः पिता वसो त्वं माता शतक्रतो वभूविथ।
अधा ते सुम्नमीमहे।
त्वाꣳ शुष्मिन्पुरुहूत वाजयंतमुपब्रुवे सहस्कृत।
स नो रास्व सूवीर्यं॥ १५॥ प॥
यदिंद्र चित्र म इह नास्ति त्वादातमद्रिवः।
राधस्तन्नो विदद्वस उभया हस्त्याभर।
यन्मन्यसे वेरेण्यमिंद्र द्युक्षं तदाभर।
विद्याम तस्य ते वयमकूपारस्य दावनः।
यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं वृहत्।
तेन दृढा चिदद्रिव आ वाजं दर्षि सातये॥ १६॥ पी॥

॥ इति चतुर्थः प्रपाठकः ॥

शिशुं जज्ञानं हर्यतं मृजंति शुंभंति विप्रं मरुतो गणेन।
कविर्गीर्भिः काव्येन कविः सन्सोमः पवित्रमत्येति रेभन्।
ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनां।
तृतीयं धाम महिषः सिषासन्सोमो विराजमनुराजति ष्टुप्।
चमूषच्छ्येनः शकुनो विभृत्वा गोविंदुर्द्रप्स आयुधानि विभ्रत्।
अपामूर्मिꣳ सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति॥१॥लु॥
एते सोमा अभि प्रियमिंद्रस्य काममक्षरन्।

वर्धंतो अस्य वीर्यम्।
पुनानासश्चमूषदो गछंतो वायुमश्विना।
ते नो धत्त सुवीर्यं।
इंद्रस्य सोम राधसे पुनानो हार्द्दि चोदय।
देवानां योनिमासदं।
मृजंति त्वा दश क्षिपो हिन्वंति सप्त धीतयः।
अनु विप्रा अमादिषुः।
देवेभ्यस्त्वा मदायकꣳ सृजानमतिमेष्यः।
सं गोभिर्वासयामसि।
पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः।
परि गव्यान्यव्यत।
मघोन आपवस्व नो जही विश्वा अपद्विषः।
इंदो सखायमाविश।
नृचक्षसं त्वा वयमिंद्र पीतꣳ स्वर्विदं।
भक्षीमहि प्रजामिषं।
वृष्टिं दिवः परिस्रव द्युम्नं पृथिव्या अधि।
सहो नः सोम पृत्सु धाः॥२॥ ति॥
सोमः पुनानो अर्षति सहस्रधारो अत्यविः।
वायोरिंद्रस्य निष्कृतं।
पवमानमवस्य वो विप्रमभिप्रगायत।
सुष्वाणं देववीतये।
पवंते वाजसातये सोमाः सहस्रपाजसः।

गृणाना देववीतये।
उत नो वाजसातये पवस्व बृहतीरिषः।
द्युमदिंदो सुवीर्यं।
अत्या हियाना न हेतृभिरसृग्रं वाजसातये।
विवारमव्यमाशवः।
ते नः सहस्रिणꣳ रयिं पवंतामा सुवीर्यं।
स्वाना देवास इंदवः।
वाश्रा अर्षंतींदवो॰भि वत्सं न मातरः।
दधन्विरे गभस्त्योः।
जुष्ट इंद्राय मत्सरः पवमानः कनिक्रदत्।
विश्वा अप द्विषो जहि।
अपघ्नंतो अराव्णः पवमानाः स्वर्दृशः।
योनावृतस्य सीदत॥३॥ दू॥
सोमा असृग्रमिंदवः सुता ऋतस्य धारया।
इंद्राय मधुमत्तमाः।
अभि विप्रा अनूषत गावो वत्सं न धेनवः।
इंद्रꣳ सोमस्य पीतये।
मदच्युत्क्षेति सादने सिंधोरूर्मा विपश्चित्।
सोमो गौरी अधिश्रितः।
दिवो नाभा विचक्षणो॰व्या वारे महीयते।
सोमो यः सुक्रतुः कविः।
यः सोमः कलशेष्वा अंतः पवित्र आहितः।

तमिंदुः परिषस्वजे ।
प्रवाचमिंदुरिष्यति समुद्रस्याधि विष्टपि ।
जिन्वन्कोशं मधुश्चुतं ।
नित्यस्तोत्रो वनस्पतिर्धेनामंतः सबर्दुघां ।
हिन्वानो मानुषा युजा ।
आ पवमान धारय रयिꣳ सहस्रवर्चसं ।
अस्मे इंदो स्वाभुवं ।
अभि प्रिया दिवः कविर्विप्रः स धारया सुतः ।
सोमो हिन्वे परावति ॥४॥ भे॥
उत्ते शुष्मास ईरते सिंधोरूर्मेरिव स्वनः ।
वाणस्य चोदयापविं ।
प्रसवे त उदीरते तिस्रो वाचो मखस्युवः ।
यदव्य एषि सानवि ।
अव्या वारैः परि प्रियꣳ हरिꣳ हिन्वंत्यद्रिभिः ।
पवमानं मधुश्चुतं ।
आपवस्व मदिंतम पवित्रं धारया कवे ।
अर्कस्य योनिमासदं ।
स पवस्व मदिंतम गोभिरंजानो अक्तुभिः ।
एंद्रस्य जठरं विश ॥५॥ का॥
अया वीती परिस्रव यस्त इंदो मदेष्वा ।
अवाहन्नवतीर्नव ।
पुरः सद्य इत्थाधिये दिवोदासाय शंबरं ।

अध त्यं तुर्वशं यदुं।
परि नो अश्वमश्वविद्गोमदिंदो हिरण्यवत्।
क्षरा सहस्रिणिरिषः॥६॥हि॥
अपघ्नन्पवते मृधोपसोमो अराव्णः।
गछन्निंद्रस्य निष्कृतं।
महो नो राय आभर पवमान जही मृधः।
रास्वेंदो वीरवद्यशः।
न त्वा शतं च न ह्रुतो राधो दित्संतमामिनन्।
यत्पुनानो मखस्यसे॥७॥खा॥
अया पवस्व धारया यया सूर्यमरोचयः।
हिन्वानो मानुषीरपः।
अयुक्त सूर एतशं पवमानो मनावधि।
अंतरिक्षेण यातवे।
उत त्या हरितो रथे सूरो अयुक्त यातवे।
इंदुरिंद्र इति ब्रुवन्॥८॥का॥
अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम्।
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः।
प्रोथदश्वो न यवसे विष्यन्यदा महः संवरणाद्व्यस्थात्।
आदस्य वातो अनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्ति।
उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरंत्यजराइधानाः।
अछाद्यामरुषोधूम एषि संदूतो अग्न इयसे हि देवान्॥९॥टी॥
तमिंद्रं वाजयामसि महे वृत्राय हंतवे।

सवृषा वृषभो भुवत्।
इंद्रः स दामने कृत ओजिष्ठः स वले हितः।
द्युम्नी श्लोकि स सोम्यः।
गिरा वज्रो न संभृतः स वलो अनपच्युतः।
ववक्ष उग्रो अस्तितः॥१०॥ छे॥
अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आनय।
पुनाहींद्राय पातवे।
तव त्य इंदो अंधसो देवा मधोर्व्याशत।
पवमानस्य मरुतः।
दिवः पीयुषमुत्तमꣳ सोममिंद्राय वज्रिणे।
सुनोता मधुमत्तमं॥११॥ खा॥
धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः।
हरिःसृजानो अत्यो न सत्वभिर्वृथा पाजांꣳ सि कृणुषे नदीष्वा।
शूरो न धत्त आयुधा गभस्त्योः स्वाऽः सिषासं रथिरो गविष्टिषु।
इंद्रस्य शुष्ममीरयन्नपस्युभिरिंदुर्हिन्वानो अज्यते मनीषिभिः।
इंद्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वाविश।
प्र नः पिन्व विद्युदभ्रेव रोदसि धिया नो वाजाꣳ उपमाहि शश्वतः॥१२॥ चा॥
यदिंद्र प्रागपागुदग्न्यग्वा हूयसे नृभिः।
सिमापुरूनृपुतो अस्यानवेसि प्रशर्ध तुर्वशे।
यद्वा रुमे रुशमे श्यावके कृप इंद्र मादयसे सचा।
कण्वासस्वा स्तोमेभिर्ब्रह्मवाहस इंद्रायछंत्यागहि॥१३॥ कि॥

उभयं शृणवच्च न इंद्रो अर्वागिदं वचः।
सत्राच्या मघवान्सोमपीतये धिया शविष्ठ आगमत्।
तं हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः।
उतोपमानां प्रथमो निषीदसि सोमकामं हि ते मनः॥१४॥ची॥
पवस्व देव आयुषगिंद्रं गच्छतु ते मदः।
वायुमारोह धर्मणा।
पवमान नितोषसे रयिं सोम श्रवाय्यं।
इंदो समुद्रमाविश।
अपघ्नन्पवसे मृधः॥१५॥लि॥
अभी नो वाजसातमं।
वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः।
नि नेदिष्टतमा इषं स्याम सुम्ने ते अध्रिगो।
परिस्यस्वानो अक्षरदिंदुरव्ये मदच्युतः।
धारा य उर्द्ध्वो अध्वरे भ्राजा न याति गव्ययुः॥१६॥ली॥
पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम।
शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजाभ्यः।
दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व॥१७॥हि॥
प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम्।
अग्ने रथन्न वेद्यम्।
कविमिव प्रशंस्यं यं देवास इति द्विता।
नि मर्त्येष्वादधुः।
त्वं यविष्ठ दाशुषो नॄः पाहि शृणुही गिरः।

रक्षा तोकमुत त्मना ॥ १८ ॥ यि ॥
एंद्र नो गधि प्रिय सत्राजिदगोह्य ।
गिरिर्न विश्वतः पृथुः पतिर्द्दिवः ।
अभी हि सत्य सोमपा उभे बभूथ रोदसी ।
इंद्रासि सुन्वतोवृधः पतिर्द्दिवः ।
त्वꣳ हि शश्वतीनामिंद्र धर्तापुरामसि ।
हंता दस्योर्मनोर्वृधः पतिर्द्दिवः ॥ १९ ॥ फे ॥
पुरां भिंदुर्युवा कविरमितौजा अजायत ।
इंद्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ।
त्वं वलस्य गोमतो यावरद्रिवो विलं ।
त्वां देवा अभिभ्युषस्तुज्यमानास आविपुः ।
इंद्रमीशानमोजसाभिस्तोमैरनूपत ।
सहस्रं यस्य रातय उत वा संति भूयसीः ॥ २० ॥ ही ॥

॥ इति अर्धप्रपाठकः ॥

अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन्प्रजा भुवनस्य गोपाः ।
वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ।
मत्सि वायुमिष्टये राधसे नो मत्सि मित्रावरुणा पूयमानः ।
मत्सि शर्धो मारुतं मत्सि देवान् मत्सि द्यावापृथिवी देव सोम ।
महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिंद्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिंदुः ॥ १ ॥ टै ॥
एष देवो अमर्त्यः पर्णवीरिव दीयसे ।

अभि द्रोणान्यासदं।
एष विप्रैरभिष्टुतोऽपो देवो विगाहते।
दधद्रत्नानि दाशुषे।
एष विश्वानि वार्या शूरो यन्निव सत्वभिः।
पवमानः सिषासति।
एष देवो रथर्यति पवमानो दशस्यति।
आविष्कृणोति वग्वनुं।
एष देवो विपन्युभिः पवमान ऋतायुभिः।
हरिर्वाजाय मृज्यते।
एष देवो विपाकृतोऽतिह्वरा॑ᳬसि धावति।
पवमानो अदाभ्यः।
एष दिवं विधावति तिरो रजाᳬसि धारया।
पवमानः कनिक्रदत्।
एष दिवं व्यासरत्तिरो राजाᳬस्यस्कृतः।
पवमानः स्वध्वरः।
एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः।
हरिः पवित्रे अर्षति।
एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः।
धारया पवते सुतः॥२॥दु॥
एष धिया यात्यण्व्या शूरो रथेभिराशुभिः।
गच्छन्निंद्रस्य निष्कृतं।
एष पुरु धियायते बृहते देवतातये।

यत्रामृतास आशत।
एतं मृजंति मर्ज्यमुपद्रोणेष्वायवः।
प्रचक्राणं महीरिषः।
एष हितो विनीयतेऽन्तः शुंध्यावता पथा।
यदी तुंजंति भूर्णयः।
एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः।
पतिः सिंधूनां भवन्।
एष शृंगाणि दोधुवच्छिशीते यूथ्योऽवृषा।
नृम्णा दधान ओजसा।
एष वसुनि पिब्दनः परुषा ययिवाँ अति।
अवशादेषु गच्छति।
एतमु त्यं दश क्षिपो हरिं हिन्वंति यातवे।
स्वायुधं मदिंतमं॥३॥के॥
एष उ स्य वृषा रथो व्यावारेभिरव्यत।
गच्छन्वाजं सहस्रिणं।
एतं त्रितस्य योषणो हरिं हिन्वंत्यद्रिभिः।
इंदुमिंद्राय पीतये।
एष स्य मानुषीष्वा श्येनो न विक्षु सीदति।
गच्छं जारो न योषितं।
एष स्य मद्यो रसो वाचष्टे दिवः शिशुः।
य इंदुर्वारमाविशत्।
एष स्य पीतये सुतो हरिरर्षति धर्णसिः।

क्रदंन्योनिमभि प्रियं।
एतं त्यं हरितो दश मर्मृज्यंते अपस्युवः।
याभिर्मदाय शुंभते॥४॥ वी॥
एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः।
अव्यं वारं विधावति।
एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः।
विश्वा धामान्याविशन्।
एष देवः शुभायतेऽधि योनावमर्त्यः।
वृत्रहा देववीतमः।
एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः।
अभि द्रोणानि धावति।
एष सूर्यं अरोचयत्पवमानो अधि द्यवि।
पवित्रे मत्सरो मदः।
एष सूर्येण हासते संवसानो विवस्वता।
पतिर्वाचो अदाभ्यः॥५॥ के॥
एष कविरभिष्टुतः पवित्रे अधितोपते।
पुनानो घ्नन्नपद्विषः।
एष इंद्राय वायवे स्वर्जित्परिषिच्यते।
पवित्रे दक्षसाधनः।
एष नृभिर्विनीयते दिवो मूर्धा वृषा सुतः।
सोमो वनेषु विश्ववित्।
एष गव्युरचिक्रदत्पवमानो हिरण्ययुः।

इंदुः सत्राजिदस्तृतः।
एष शुष्म्यसिष्यदंतरिक्षे वृषा हरिः।
पुनान इंदुरिंद्रमा।
एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति।
देवावीरघशꣳसहा॥६॥ गु॥
स सुतः पीतये वृषा सोमः पवित्रे अर्षति।
विघ्नन्रक्षाꣳसि देवयुः।
स पवित्रे विचक्षणो हरिरर्षति धर्णसिः।
अभि योनिं कनिक्रदत्।
स वाजी रोचनं दिवः पवमानो विधावति।
रक्षोहा वारमव्ययं।
स त्रितस्याधिसानवि पवमानो अरोचयत्।
जामिभिः सूर्यꣳसह।
स वृत्रहा वृषा सुतो वरिवोविददाभ्यः।
सोमो वाजमिवासरत्।
स देवः कविनेषितोऽभि द्रोणानि धावति।
इंदुरिंद्राय मꣳहयन्॥६॥ खे॥
यः पावमानिरध्येत्यृषिभिः संभृतꣳरसं।
सर्वꣳसपूतमश्नाति स्वदितं मातरिश्वना।
पावमानीर्यो अध्येत्यृषिभिः संभृतꣳरसं।
तस्मै सरस्वती दुहे क्षीरꣳसर्पिर्मधूदकं।
पावमानीः स्वस्त्ययनीः सूदुघा हि घृतश्चुतः।

ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतꣳ हितं।
पावमानीर्दधंतु नः।
इमं लोकमथो अमुं।
कामान्समर्धयंतु नो देवीर्देवैः समाहृताः।
येन देवाः पवित्रेणात्मानं पुनते सदा।
तेन सहस्रधारेण पावमानीः पुनंतु नः।
पावमानी स्वस्त्ययनीस्ताभिर्गछति नांदनं।
पुण्याꣳश्च भक्षान्भक्षयत्यमृतत्वं च गछति॥ ८॥ ती॥
अगन्म महा नमसा यविष्ठं यो दिदाय समिद्धः स्वे दुरोणे।
चित्रभानुꣳ रोदसी अंतरूर्विं स्वाहुतं विश्वतः प्रत्यंचं।
महा विश्वा दुरितानि साह्वानग्निष्टवे दम आ जातवेदाः।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः।
त्वं वरुण उत मित्रो अग्ने त्वां वर्धंति मतिभिर्वसिष्ठाः।
त्वे वसु सुषणनानि संतु यूयं पात स्वस्तिभिः सदा नः॥ ९॥ ही॥
महाꣳ इंद्रो य ओजसा पर्जन्यो वृष्टिमाꣳ इव।
स्तोमैर्वत्सस्य वावृधे।
कण्वा इंद्रं यदक्रत स्तोमैर्यज्ञस्य साधनं।
जामि ब्रुवत आयुधा।
प्रजामृतस्य पिप्रतः प्रयद्भरंत वह्नयः।
विप्रा ऋतस्य वाहसा॥ १०॥ टि॥
पवमानस्य जिघ्नतो हरेश्चंद्रा असृक्षत।
जीरा अजिरशोचिषः।

पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः ।
हरिश्चंद्रो मरुद्गणः ।
पवमान व्यश्नुहि रश्मिभिर्वाजसातमः ।
दधत्स्तोत्रे सुवीर्यं ॥ ११ ॥ ह ॥
परीतो षिंचता सुतꣳ सोमो य उत्तमꣳ हविः ।
दधन्वाꣳ यो नर्यो अप्स्वाꣳतरा सुषाव सोममद्रिभिः ।
नूनं पुनानोऽविभिः परिस्रवादब्धः सुरभिंतरः ।
सुते चित्वाप्सु मदामो अंधसा श्रीणंतो गोभिरुत्तरं ।
परि स्वानश्चक्षसे देवमादनः क्रतुरिंदुर्विचक्षणः ॥ १२ ॥ ख ॥
असावि सोमो अरुषो वृषा हरि राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारमत्येष्यव्ययꣳ श्येनो न योनिं घृतवंतमासदत् ।
पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे ।
स्वसार आपो अभिगा उदासरन्संग्रावभिर्वसते वीते अध्वरे ।
कविर्वेधस्यापर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि ।
अपसेधं दुरिता सोम नो मृड घृतावसानः परियासि निर्णिजं ॥१३॥गृ॥
श्रायंत इव सूर्यं विश्वेदिंद्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रतिभागन्न दीधिमः ।
अलर्षि रातिं वसुदामुपस्तुहि भद्रा इंद्रस्य रातयः ।
यो अस्य कामं विधतो न रोषति मनो दानाय चोदयत् ॥ १४ ॥ लू ॥
यत इंद्र भयामहे ततो नो अभयं कृधि ।
मघवंछग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ।
त्वꣳ हि राधसस्पते राधसो महः क्षयस्यासि विधर्ता ।

तं त्वा वयं मघवन्निंद्र गिर्वणः सुतावंतो हवामहे ॥ १५ ॥ वा ॥
त्वꣳ सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे।
पवस्व मꣳहयद्रयिः।
त्वꣳ सुतो मदिंतमो दधन्वान्मत्सरिंतमः।
इंदुः सत्राजिदस्तृतः।
त्वꣳ सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत्।
द्युमंतꣳ शुष्ममाभर ॥ १६ ॥ ॥ ली ॥
पवस्व देववीतय इंदो धाराभिरोजसा।
आ कलशं मधुमान्सोम नः सदः।
तव द्रप्सा उतप्रुत इंद्रम्मदाय वावृधुः।
त्वा देवासो अमृताय कं पपुः।
आ नः सुतास इंदवः पुनाना धावता रयिं।
वृष्टिद्यावो रीत्यापः स्वर्विदः ॥ १७ ॥ वौ ॥
परित्यꣳ हर्यतꣳ हरिं वभ्रुं पुनंति वारेण।
यो देवान्विश्वाꣳ इत्परि मदेन सह गछति।
द्विर्यं पंच स्वयशसं सखायो अद्रिसंहतं।
प्रियमिंद्रस्य काम्यं प्रस्नापयंत ऊर्मयः।
इंद्राय सोम पातवे वृत्रघ्ने परिषिच्यसे।
नरे च दक्षिणावते वीराय सदनासदे ॥ १८ ॥ जी ॥
पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय।
प्र ते सोतारो रसं मदाय पुनंति सोमं महे द्युम्नाय।
शिशुं जज्ञानं हर्यतं मृजंति पवित्रे सोमं देवेभ्य इंदुं ॥ १९ ॥ का ॥

उपोषु जातमप्तुरं गोभिर्भंगं परिष्कृतं।
इंदुं देवा अयासिषुः।
तमिद्वर्धंतु नो गिरो वत्सꣳ सꣳ शिश्वरीरिव।
य इंद्रस्य हृदꣳ सनिः।
अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषं।
वर्धा समुद्रमुक्थ्य॥२०॥ही॥
आघाये अग्निमिंधते स्तृणंति बर्हिरानुषक्।
येषामिंद्रो युवा सखा।
बृहन्निदिध्म एषां भूरिशस्तं पृथुस्वरुः।
येषामिंद्रो युवा सखा।
अयुद्ध इद्युधा वृतꣳ शूर आजति सत्वभिः।
येषामिंद्रो युवा सखा॥२१॥ठ॥
य एक इद्विदयते वसु मर्ताय दाशुषे।
ईशानो अप्रतिष्कुत इंद्रो अंग।
यश्चिद्धि त्वा बहुभ्य आ सुतावाꣳ आविवासति।
उग्रं तत्पत्यते शव इंद्रो अंग।
कदा मर्तमराधसं पदा क्षुंपमिव स्फुरत्।
कदा नः शुश्रवद्गिर इंद्रो अंग॥२२॥कि॥
गायंति त्वा गायत्रिणोऽर्चंत्यर्कमर्किणः।
ब्रह्माणस्त्वा शतक्रत उद्वꣳशमिव येमिरे।
यत्सानोः सान्वारुहो भूर्यस्पष्टकर्त्वं।
तदिंद्रो अर्थं चेतति यूथेन वृष्णिरेजति।

युश्स्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इंद्र सोमपा गिरामुपश्रुतिं चर॥ २३॥ वी॥

॥ इति पंचमः प्रपाठकः॥ ॥ छ॥ ॥ छ॥ ॥ छ॥

सुषमिद्धो न आवह देवाश्अग्ने हविष्मते ।
होतः पावक यक्षि च ।
मधुमंतं तनूनपाद्यज्ञं देवेषु नः कवे ।
अद्या कृणुह्यूतये ।
नराशश्समिह प्रियमस्मिन्यज्ञ उपह्वये ।
मधुजिह्वश्हविष्कृतं ।
अग्ने सुखतमे रथे देवाश्ईडित आवह ।
असि होता मनुर्हितः॥ १॥ रा॥
यदद्य सूर उदिते॰नागा मित्रो अर्यमा ।
सुवाति सविता भगः ।
सुप्रावीरस्तु सः क्षयः प्रनुयामंसुदानवः ।
ये नो अश्हो॰तिपिप्रति ।
उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।
महो राजान ईशते॥ २॥ स्व॥
उ त्वा मंदंतु स्तोमाः कृणुष्व राधो अद्रिवः ।
अव ब्रह्मद्विषो जहि ।
पदा पणीनराधसो निबाधस्व महाश्असि ।
न हि त्वा कश्चन प्रति ।

त्वमीशिषे सुतानामिंद्र त्वमसुतानां।
त्वꣳ राजा जनानां॥३॥ ठि॥
आजागृविर्विप्र ऋतं मतीनाꣳ सोमः पुनानो असदच्चमूषु।
सपंति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः।
स पुनान उपसुरे दधान ओभे आप्रा रोदसी वीष आवः।
प्रियाचिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्रयꣳ सत्।
स वर्द्धिता वर्द्धनः पूयमानः सोमो मीढ्वाꣳ अभि नो ज्योतिषावीत्।
यच नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभिगा अद्रिमिष्णन्॥४॥ तै॥
माचिदन्यद्विशꣳ सत सखायो मा रिषण्यत।
इंद्रमित्स्तोता वृषणꣳ सचा सुते मुहुरुक्था च शꣳ सत।
अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहं।
विद्वेषणꣳ संवननमुभयंकरं मꣳ हिष्ठमुभयाविनं॥५॥ यी॥
उदुत्ये मधुमत्तमा गिरस्तोमास ईरते।
सचाजितो धनसा अक्षितोतयो वाजयंतो रथा इव।
कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमाशत।
इंद्रꣳ स्तोमेभिर्महयंत आयवः प्रियमेधासो अस्वरन्॥६॥ ला॥
पर्यूषु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः।
द्विषस्तरध्या ऋणया न ईरसे।
अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः।
गोजीरया रꣳ हमाणः पुरंध्या।
अनु हि त्वा सुतꣳ सोममदामसि॥७॥ ला॥
परिप्रधन्वा एवामृताय महे क्षयाय स शुक्रो अर्षदिव्यः पीयूषः।

इंद्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ॥ ८ ॥ ळ ॥
सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः साकमीरते ।
तंतुं ततं परिसर्गास आशवो नेंद्रादृते पवते धाम किंचन ।
उपो मतिः पृच्यते सिच्यते मधुमंद्राजनी चोदते अंतरासनि ।
पवमानः संतनिः सुन्वतामिव मधुमां द्रप्सः परिवारमर्षति ।
उक्षा मिमेति प्रतियंति धेनवो देवस्य देवीरुपयंति निष्कृतं ।
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥ ९ ॥ ग ॥
अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तं ।
दूरेदृशं गृहपतिमथर्व्युं ।
तमग्निमस्ते वसवो न्यृण्वंत्सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दम आस नित्यः ।
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वंत उपयंति वाजाः ॥ १० ॥ डी ॥
आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयंत्स्वः ।
अंतश्चरति रोचनास्य प्राणादपानती ।
व्यख्यन्महिषो दिवं ।
त्रिंशद्धाम विराजति वाक्पतंगाय धीयते ।
प्रतिवस्तोरह द्युभिः ॥ ११ ॥ छि ॥

॥ इति अर्धप्रपाठकः ॥

उपप्रयंतो अध्वरं मंत्रं वोचेमाग्नये।
आरे अस्मे च शृण्वते।
य स्नीहितिषु पूर्व्यः संजग्मानासु कृष्टिषु।
अरक्षद्दाशुषे गयं।
स नो वेदो अमात्यमग्नी रक्षतु शंतमः।
उतास्मान्पात्वꣳहसः।
उत ब्रुवंतु जंतव उदग्निर्वृत्रहाजनि।
धनंजयो रणेरणे॥१॥ ति॥
अग्ने युꣳक्ष्वा हि ये तवाश्वासो देव साधवः।
अरं वहंत्याशवः।
अच्छा नो याह्यावहाभिप्रयाꣳसि वीतये।
आ देवांत्सोमपीतये।
उदग्ने भारत द्युमदजस्रेण दविद्युतत्।
शोचो विभाह्यजर॥२॥ यि॥
प्रसुन्वानायांध सो मर्तो न वष्टतद्वचः।
अप श्वानमराधसꣳ हतामखन्न भृगवः।
आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः।
सरज्जारो न योषणां वरो न योनिमासदं।
सवीरो दक्षसाधनो वि यस्तस्तंभ रोदसी।
हरिः पवित्रे अव्यत वेधा न योनिमासदं॥३॥ खे॥
अभ्रातृव्यो अना त्वमनापिरिंद्र जनुषा सनादसि।
युधेदापित्वमिछसे।

न की रेवंतꣳ सख्याय विंदसे पीयंति ते सुराश्वः।
यदा कृणोषि न दनुꣳ समूहस्यादित्पितेवहूयसे॥४॥ यि॥
आ त्वा सहस्रमाशतं युक्ता रथे हिरण्यये।
ब्रह्मयुजो हरय इंद्र केशिनो वहंतु सोम पीतये।
आ त्वा रथे हिरण्यये हरी मयूरशेप्या।
शितिपृष्ठा वहतां मध्वो अंधसो विवक्षणस्य पीतये।
पिबा त्वाऽस्यगिर्वणः सुतस्य पूर्वपा इव।
परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते॥५॥ प॥
आसोतापरिषिंचताश्वं न स्तोममप्तुरꣳ रजस्तुरम्।
वनप्रक्षमुदप्रुतम्।
सहस्रधारं वृषभं पयोदुहं प्रीयं देवाय जन्मने।
ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत्॥६॥ या॥
अग्निर्वृत्राणि जंघनद्द्रविणस्युर्विपन्यया।
समिद्धः शुक्र आहुतः।
गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे।
सीदन्नृतस्य योनिमा।
ब्रह्म प्रजावदाभर जातवेदो विचर्षणे।
अग्ने यद्दीदयद्दिवि॥७॥ व॥
अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्तरसं।
सुतः पवित्रं पर्येतिरेभन्मितेवसद्म पशुमंति होता।
भद्रा वस्त्रा समन्याऽवसानो महान्कविर्निवचनानि शꣳसत्।
आवच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ।

समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे।
अभिस्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः॥८॥ रि॥
एतोन्विंद्रꣳ स्तवाम शुद्धꣳ शुद्धेन साम्ना।
शुद्धैरुक्थैर्वावृध्वाꣳ सं शुद्धैराशीर्वान्ममत्तु।
इंद्र शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः।
शुद्धो रयिन्निधारय शुद्धो ममद्धि सोम्य।
इंद्र शुद्धो हि नो रयिꣳ शुद्धो रत्नानि दाशुषे।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजꣳ सिषाससि॥ ९॥ यी॥
अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः।
देवस्य द्रविणस्य वः।
अग्निर्जुषत नो गिरो होता यो मानुषेष्वा।
स यक्षद्दैव्यं जनं।
त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः।
त्वया यज्ञं वितन्वते॥ १०॥ रि॥
अभि त्रिपृष्ठं वृषणं वयोधामंगोषिणमवावशं त वाणीः।
वनावसानो वरुणो न सिंधुर्वि रत्नधा दयते वार्याणि।
शूरग्रामः सर्ववीरः सहावाञ्जेता पवस्व सनिता धनानि।
तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान्पृतनासु शत्रून्।
उरुगव्युतिरभयानि कृण्वंत्समीचीने आपवस्वा पुरंधी।
अपःसिषासन्नुषसःस्वर्गाःसंचिक्रदोमहो अस्मभ्यं वाजान्॥११॥ पू॥
त्वमिंद्र यशा अस्यृजीषी शवसस्पतिः।
त्वं वृत्राणिहꣳस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः।

तमु त्वा नूनमसुरप्रचेतसꣳ राधो भागमिवेमहे ।
महीवकृत्तिः शरणा त इंद्र प्र ते सुम्ना नो अश्नवन् ॥ १२ ॥ त ॥
यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
अस्य यज्ञस्य सुक्रतुम् ।
अपान्नपातꣳ सुभगꣳ सुदीदितिमग्निमु श्रेष्ठशोचिषम् ।
स नो मित्रस्य वरुणस्य सो अपामासुम्नं यक्षते दिवि ॥ १३ ॥ ता ॥
यमग्ने पृत्सु मर्त्यमवा वाजेषु यंजुनाः ।
स यंता शश्वतीरिषः ।
न किरस्य सहंत्य पर्येता कयस्यचित् ।
वाजो अस्ति श्रवाय्यः ।
स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता ।
विप्रेभिरस्तु सनिता ॥ १४ ॥ ठा ॥
साकमुक्षो मर्जयंत स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणन्ननक्षे अत्यो न वाजी ।
सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः ।
मर्यो न योषामभिनिष्कृतं यत्संगच्छते कलश उस्रियाभिः ।
उत प्र पिप्य ऊधरघ्न्याया इंदुर्धाराभिः सचते सुमेधाः ।
मूर्धानं गावः पयसा चमूष्वभिश्रीणंति वसुभिर्न निक्तैः ॥ १५ ॥ चु ॥
पिबा सुतस्य रसिनो मत्स्वा न इंद्र गोमतः ।
आपिर्नो बोधि सधमाद्ये वृधेꣳस्माꣳ अवंतु ते धियः ।
भूयाम ते सुमतौ वाजिनो वयं मा नस्तरभिमातये ।
अस्मां चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ॥ १६ ॥ ल ॥

त्रिरस्मै सप्तधेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत।
स भक्षमाणो अमृतस्य चारुण उभे द्यावा काव्येना विशश्रथे।
तेजिष्ठा अपो मꣳहना परिव्यत यदी देवस्य श्रवसा सदो विदुः।
ते अस्य संतु केतवोऽमृत्यवो दाभ्यासो जनुषी उभे अनु।
येभिर्नृम्णा च देव्या च पुन त आदिद्राजानं मनना अगृभ्णत॥१७॥चे॥
अभिवायुवीत्यर्षागृणानोऽ३ऽभि मित्रावरुणा पूयमानः।
अभीनरं धिजवनꣳ रथेष्टामभींद्रं वृषणं वज्रबाहुं।
अभि वस्त्रा सुवसनान्यर्षाभिधेनूः सुदुघाः पूयमानः।
अभि चंद्रा भर्तवे नो हिरण्याभ्यश्वाꣳ रथिनो देवसोम।
अभी नो अर्षे दिव्यावसून्यभि विश्वा पार्थिवा पूयमान।
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः॥१८॥खे॥
यज्ञा यथा अपूर्व्य मघवन्वृत्रहत्याय।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवं।
तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः।
तद्विश्वमभिभूरसि यज्जातं यच्च जंत्वं।
आमासु पक्वमैरय आ सूर्यꣳ रोहयो दिवि।
घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत्॥१९॥ये॥
मत्स्यपायिते महः पात्रस्येव हरिवो मत्सरो मदः।
वृषा ते वृष्ण इंदुर्वाजी सहस्रसातमः।
आ नस्ते गंतुमत्सरो वृषा मदो वरेण्यः।
सहावाꣳ इंद्रसानसिः पृतनाषाडमर्त्यः।

त्वꣳ हि शूरः सनिता चोदयो मनुषो रथं।
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा॥२०॥वि॥

॥ इति षष्ठः प्रपाठकः ॥

पवस्व वृष्टिमा सु नो॰पामूर्मिं दिवस्परि।
अयक्ष्मा बृहतीरिषः।
तया पवस्व धारया यया गाव इहागमन्।
जन्यास उप नो गृहं।
घृतं पवस्व धारया यज्ञेषु देववीतमः।
अस्मभ्यं वृष्टिमापव।
स न ऊर्जे व्य३व्ययं पवित्रं धाव धारया।
देवासः शृणवंहिकं।
पवमानो असिष्यदद्रक्षाꣳस्यपजंघनत्।
प्रत्नवद्रोचयन्रुचः॥१॥ची॥
प्रत्यस्मै पिपीषते विश्वानि विदुषे भर।
अरंगमाय जग्मये॰पश्चाद्दघ्वने नरः।
एमेनं प्रत्येतन सोमेभिः सोमपातमं।
अमत्रेभिर्ऋजीषिणमिंद्रꣳ सुतेभिरिंदुभिः।
यदी सुतेभिरिंदुभिः सोमेभिः प्रतिभूषत।
वेदा विश्वस्य मेधिरो धृषत्तंतमिदेषते।
अस्मा अस्मा इदंधसो॰ध्वर्यो प्रभरा सुतं।
कुवित्समस्य जेन्यस्य शर्धतो॰भिशस्तेरवस्वरत्॥२॥ठ॥

बभ्रवे नु स्वतवसे रुणाय दिविस्पृशे।
सोमाय गाथमर्चत।
हस्तच्युतेभिरद्रिभिः सुतꣳ सोमं पुनीत न।
मधावाधावता मधु।
नमसेदुपसीदत दध्नेदभिश्रीणीत न।
इंदुमिंद्रे दधात न।
अमित्रहा विचर्षणिः पवस्व सोम शं गवे।
देवेभ्यो अनुकामकृत्।
इंद्राय सोम पातवे मदाय परिषिच्यसे।
मनश्चिन्मनसस्पतिः।
पवमान सुवीर्यꣳ रयिꣳ सोम रिरीहि णः।
इंदविंद्रेण नो युजा॥३॥ यू॥
उद्घेदभिश्रुतामघं वृषभन्नर्योपसं।
अस्तारमेषि सूर्य।
नव यो नवतिं पुरो बिभेद बाह्वोजसा।
अहिं च वृत्रहावधीत्।
स न इंद्रः शिवः सखाश्वावद्गोमद्यवमत्।
उरुधारेव दोहते॥४॥ ती॥
विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतं।
वातजुतो यो अभिरक्षति त्मना प्रजाःपिपर्ति बहुधा विराजति।
विभ्राड् बृहत्सुभृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितं।
अमित्रहा वृत्रहा दस्युहंतमं ज्योतिर्जज्ञे असुरहा सपत्नहा।

इदꣳ श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत्।
विश्वभ्राड्भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतं॥५॥ जि॥
इंद्र क्रतुन्न आभर पिता पुत्रेभ्यो यथा।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि।
मा नो अज्ञाता वृजना दुराध्योऽमाशिवासोऽवक्रमुः।
त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि॥६॥ ल॥
अद्याद्या श्वःश्व इंद्र त्रास्व परे च नः।
विश्वा च नो जरितृंत्सत्पते अहा दिवानक्तं च रक्षिषः।
प्रभंगी शूरो मघवा तुवीमघः संमिश्लो वीर्याय कं।
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः॥७॥ वि॥
जनीयंतो न्वग्रवः पुत्रीयंतः सुदानवः।
सरस्वंतꣳ हवामहे॥८॥ रौ॥
उत नः प्रिया प्रियासु सप्त स्वसा सुजुष्टा।
सरस्वती स्तोम्याभूत्॥९॥ ह्री॥
तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्।
सोमानाꣳ स्वरणं।
अग्न आयूꣳषि पवसे॥१०॥
ता नः शक्तं पार्थिवस्य।
ऋतमृतेन सपंते शिरं दक्षमाशाते।
अद्रूहा देवौ वर्द्धते।
वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः।

बृहंतं गर्तमाशाते ॥ ११ ॥ पा ॥
युंजंति ब्रध्नमरुषं चरंतं परितस्थुपः ।
रोचंते रोचना दिवि ।
युंजंत्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ।
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः ॥ १२ ॥ य ॥
अयꣳ सोम इंद्र तुभ्यꣳ सुन्वे तुभ्यं पवते त्वमस्य याहि ।
त्वꣳ ह यं चकृषे त्वं ववृष इंदुं मदाय युज्याय सोमं ।
स ईꣳ रथो न भूरिषाडयोजि महः पुरूणि सातये वसूनि ।
आदीं विश्वा न हुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवंत ।
शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाड् न यज्ञः ॥ १३ ॥ घी ॥
त्वमग्ने यज्ञानाꣳ होता विश्वेषाꣳ हितः ।
देवेभिर्मानुषे जने ।
स नो मंद्राभिरध्वरे जिह्वाभिर्यजा महः ।
आ देवान्वक्षि यक्षि च ।
वेत्था हि वेधो अध्वनः पथश्च देवांजसा ।
अग्ने यज्ञेषु सुक्रतो ॥ १४ ॥ हो ॥
होता देवो अमर्त्यः पुरस्तादेति मायया ।
विदथानि प्रचोदयन् ।
वाजी वाजेषु धीयतेऽध्वरेषु प्रणीयते ।

इद२ श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत्।
विश्वभ्राड्भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतं॥५॥ जि॥
इंद्र क्रतुन्न आभर पिता पुत्रेभ्यो यथा।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि।
मा नो अज्ञाता वृजना दुराध्योऽमाशिवासोऽवक्रमुः।
त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि॥६॥ ल॥
अद्याद्या श्वःश्व इंद्र त्रास्व परे च नः।
विश्वा च नो जरितृंत्सत्पते अहा दिवानक्तं च रक्षिषः।
प्रभंगी शूरो मघवा तुवीमघः संमिश्लो वीर्याय कं।
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः॥७॥ वि॥
जनीयंतो न्वग्रवः पुत्रीयंतः सुदानवः।
सरस्वंत२ हवामहे॥८॥ रौ॥
उत नः प्रिया प्रियासु सप्त स्वसा सुजुष्टा।
सरस्वती स्तोम्याभूत्॥९॥ हौ॥
तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्।
सोमानाऽ२ स्वरणं।
अग्न आयूऽ२षि पवसे॥१०॥
ता नः शक्तं पार्थिवस्य।
ऋतमृतेन सपंते शिरं दक्षमाशाते।
अदूहा देवौ वर्द्धते।
वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः।

वृहंतं गर्तमाशाते ॥ ११ ॥ पा ॥
युंजंति ब्रध्नमरुषं चरंतं परितस्थुपः ।
रोचंते रोचना दिवि ।
युंजंत्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ।
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः ॥ १२ ॥ य ॥
अयꣳ सोम इंद्र तुभ्यꣳ सुन्वे तुभ्यं पवते त्वमस्य पाहि ।
त्वꣳ ह यं चकृषे त्वं ववृष इंदुं मदाय युज्याय सोमं ।
स ईꣳ रथो न भूरिषाडयोजि महः पुरूणि सातये वसूनि ।
आदीं विश्वा न हुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवंत ।
शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाड् न यज्ञः ॥१३॥ धी॥
त्वमग्ने यज्ञानाꣳ होता विश्वेषाꣳ हितः ।
देवेभिर्मानुषे जने ।
स नो मंद्राभिरध्वरे जिह्वाभिर्यजा महः ।
आ देवान्वक्षि यक्षि च ।
वेत्था हि वेधो अध्वनः पथश्च देवांजसा ।
अग्ने यज्ञेषु सुक्रतो ॥ १४ ॥ हो ॥
होता देवो अमर्त्यः पुरस्तादेति मायया ।
विदथानि प्रचोदयन् ।
वाजी वाजेषु धीयतेऽध्वरेषु प्रणीयते ।

विप्रो यज्ञस्य साधनः ।
धिया चक्रे वरेण्यो भूतानां गर्भमादधे ।
दक्षस्य पितरं तना ॥ १५ ॥ रा ॥
आ सुते सिंचत श्रियꣳ रोदस्योरभिश्रियं ।
रसा दधीत वृषभं ।
ते जानत स्वमोक्याꣳꣳ संवत्सासो न मातृभिः ।
मिथो न संत जामिभिः ।
उप स्रक्केषु बप्सतः कृण्वते धरुणं दिवि ।
इंद्रे अग्ना नमस्वः ॥ १६ ॥ च ॥
तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वे मदंत्यूमाः ।
वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवंत प्रभृता मदेषु ।
त्वे क्रतुमपिवृजंति विश्वे द्विर्यदेते त्रिर्भवंत्यूमाः ।
स्वादो स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभियोधीः ॥ १७ ॥ णी ॥
त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सोममपिबद्विष्णुना सुतं यथावशं ।
स ईं ममाद महिकर्म कर्तवे महामुरुꣳ सैनꣳ सश्चद्देवो देवꣳ सत्य इंदुः सत्यमिंद्रं ।
साकं जातः क्रतुना साकमोजसाववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।

दाता राधः स्तुवते काम्यं वसु प्रचेतन सैनꣳ सश्चद्देवोदेवꣳ सत्य
इंदुः सत्यमिंद्रं।
अध त्विषीमाꣳ अभ्योजसा क्रिविं युधाभवदा रोदसी अपृणद
स्य मज्मना प्रवावृधे।
अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतय सैनꣳ सश्चद्देवोदेवꣳ सत्य
इंदुः सत्यमिंद्रं॥१८॥ थि॥

॥ इति अर्धप्रपाठकः ॥

अभि प्र गोपतिं गिरेंद्रमर्च यथा विदे।
सूनुꣳ सत्यस्य सत्पतिं।
आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि।
यत्राभिसंनवामहे।
इंद्राय गाव आशिरं दुदुह्रे वज्रिणे मधु।
यत्सीमुपह्वरे विदत्॥१॥ हा॥
आ नो विश्वासु हव्यमिंद्रꣳ समत्सु भूषत।
उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋजीषम।
त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत्।
तुवि द्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः॥२॥ या॥
प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आनिरधुक्षत।
इंद्रमभिजायमानꣳ समस्वरन्।
आदीं केचित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत।
दिवो न वारꣳ सविता व्यूर्णुते।

अथ यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना।
यूथे न निष्ठा वृषभो विराजसि॥३॥खु॥
इममूषु त्वमस्माकꣳ सनिं गायत्रन्नव्याꣳसं।
अग्ने देवेषु प्रवोचः।
विभक्तासि चित्रभानो सिंधोरूर्मा उपाक आ।
सद्यो दाशुषे क्षरसि।
आ नो भज परमेष्वावाजेषु मध्यमेषु।
शिक्षा वस्वो अंतमस्य॥४॥ट॥
अहमिद्धि पितुः परिमेधामृतस्य जग्रह।
अहꣳ सूर्य इवाजनि।
अहं प्रत्नेन जन्मना गिरः शुंभामि कण्ववत्।
येनेंद्रः शुष्ममिद्दधे।
ये त्वामिंद्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः।
ममेद्वर्धस्व सुष्टुतः॥५॥यु॥
अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत।
ये देवत्रा य आयुषु तेभिर्नो महया गिरः।
प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः।
तनये तोके अस्मदा सम्यङ्वाजैः परिवृतः।
त्वं नो अग्ने अग्निभिर्ब्रह्मयज्ञं च वर्द्धय।
त्वं नो देवतातये रायो दानाय चोदय॥६॥डि॥
त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं दधुः।
स त्वं नो वीर वीर्याय चोदय।

अभ्यभि हि श्रवसा ततर्दिथोत्सं न कंचिज्जनपानमक्षितं।
शर्याभिर्न भरमाणो गभस्त्योः।
अजीजनो अमृत मर्त्याय कमृतस्य धमन्नमृतस्य चारुणः।
सदासरो वाजमछा सनिष्यदत् ॥७॥ ल॥
एंदुमिंद्राय सिंचत पिवातिसोम्यं मधु।
प्र राधाꣳसि चोदयते महित्वना।
उपो हरीणां पतिꣳ राधः पृंचंतमब्रवम्।
नूनꣳ श्रुधि स्तुवतो अश्व्यस्य।
न ह्यांꣳग पुरा च न जज्ञे वीरतरस्त्वत्।
न की राया नैवथा न भंदना ॥८॥ च॥
नदं व ओदतीनां नदं योयुवतीनां।
पतिं वो अघ्न्यानां धेनूनामिपुध्यसि ॥९॥ व॥
देवो वो द्रविणोदाः पूर्णां विवष्ट्वा सिचं।
उद्वा सिंचध्वमुपवा पृणध्वमादिद्वो देव ओहते।
तꣳ होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृणत।
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥१०॥ क्ठि॥
अदर्शिगातुवित्तमो यस्मिन्व्रतान्यादधुः।
उपोषु जातमार्यस्य वर्द्धनमग्निन्नक्षंतु नो गिरः।
यस्माद्रेजंत कृष्टयश्चर्कृत्यानि कृण्वतः।
सहस्र सां मेध साताविव त्मनाग्निं धीभिर्नमस्यत।
प्रदेवो दासो अग्निः ॥११॥ हा॥
अग्न आयूꣳषि पवसे।

अग्निर्ऋषिः पवमानः पांचजन्यः पुरोहितः।
तमीमहे महागयं।
अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं।
दधद्रयिं मयि पोषं॥१२॥ फ॥
अग्ने पावक रोचिषा मंद्रया देवजिह्वया।
आ देवान्वक्षि यक्षि च।
तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशं।
देवाꣳ आ वीतये वह।
वीतिहोत्रं त्वा कवे द्युमंतꣳ समिधीमहि।
अग्ने वृहंतमध्वरे॥१३॥ टौ॥
अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि।
विश्वासु धीषु वंद्य।
आ नो अग्ने रयिं भर सत्रासाहं वरेण्यं।
विश्वासु पृत्सु दुष्टरं।
आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसं।
मार्डीकं धेहि जीवसे॥१४॥ वौ॥
अग्निꣳ हिन्वंतु नो धियः सप्तिमाशुमिवाजिषु।
तेन जेष्म धनंधनं।
यया गा आकरामहे सेनयाग्ने तवोत्या।
तां नो हिन्व मघत्तये।
आग्ने स्थूरꣳ रयिं भर पृथुं गोमंतमश्विनं।
अङ्धि खं वर्तया पविं।

अग्ने नक्षत्रमजरमासूर्यꣳ रोहयो दिवि।
दध ज्योतिर्जनेभ्यः।
अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत्।
बोधास्तोत्रे वयो दधत्॥१५॥ या॥
अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्या अयं।
अपाꣳ रेताꣳ सि जिन्वति।
ईशिषे वार्यस्य हि दात्रस्याग्ने स्वः पतिः।
स्तोता स्यां तव शर्मणि।
उदग्ने शुचयस्तव शुक्रा भ्राजंत ईरते।
तव ज्योतीꣳ ष्यर्चयः॥१६॥ ली॥

॥ इति सप्तमः प्रपाठकः॥

कस्ते जामिर्जनानामग्ने को दाश्वध्वरः।
को ह कस्मिन्नसिश्रितः।
त्वं जामिर्जनानामग्ने मित्रो असि प्रियः।
सखा सखिभ्य ईड्यः।
यजा नो मित्रावरुणा यजा देवाꣳ ऋतं वृहत्।
अग्ने यक्षि स्वं दमं॥१॥ रु॥
ईडेन्योनमस्यस्तिरस्तमाꣳ सि दर्शतः।
समग्निरिध्यते वृषा।
वृषो अग्निः समिध्यतेऽश्वो न देववाहनः।
तꣳ हविष्मंत ईडते।

वृषणं त्वा वयं वृषन्वृषणः समिधीमहि।
अग्ने दीद्यतं वृहत् ॥२॥ लि॥
उत्ते वृहंतो अर्चयः समिधानस्य दीदिवः।
अग्ने शुक्रास ईरते।
उप त्वा जुह्वोऽममघृताचीर्यंतु हर्यत।
अग्ने हव्या जुषस्व नः।
मंद्रᳬ होतारमृत्विजं चित्रभानुं विभावसुं।
अग्निमीडे स उ श्रवत् ॥३॥ ह॥
पाहि नो अग्न एकया पाह्यूत द्वितीयया।
पाहि गीर्भिस्तिसृभिरूर्जांपते पाहि चतसृभिर्वसो।
पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव।
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥४॥ यि॥
इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाᳬ अदर्शि।
चिकिद्विभाति भासा वृहता सिक्नीमेति रुशतीमपाजन्।
कृष्णां यदेनीमभिवर्पसाभूज्जनयन्योषां वृहतः पितुर्जां।
ऊर्द्ध्वं भानुᳬ सूर्यस्य स्तभायं दिवो वसुभिररतिर्विभाति।
भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात्।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभिराममस्थात् ॥५॥ यो॥
कया ते अग्ने अंगिर ऊर्जो नपादुपस्तुतिं।
वराय देव मन्यवे।
दाशेम कस्य मनसा यज्ञस्य सहसो यहो।
कदुवोच इदं नमः।

अधा त्वं हिनस्करो विश्वा अस्मभ्यं सुक्षितीः ।
वाजद्रविणसो गिरः ॥ ६ ॥ ट ॥
अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ।
अच्छा हि त्वा सहसः सूनो अंगिरः स्रुचश्चरंत्यध्वरे ।
ऊर्जो नपातं घृतकेशमीमहे ऽग्निं यज्ञेषु पूर्व्यं ॥ ७ ॥ या ॥
अच्छा नः शीरशोचिषं गिरो यंतु दर्शतं ।
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ।
अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणां ।
द्विता यो भूदमृतो मर्त्येष्वा होता मंद्रतमो विशि ॥ ८ ॥ टा ॥
अदाभ्य पुर एता विशामग्निर्मानुषीणां ।
तूर्णीरथः सदा नवः ।
अभि प्रयांसि वाहसा दाश्वां अश्नोति मर्त्यः ।
क्षयं पावकशोचिषः ।
साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः ।
अग्निस्तुविश्रवस्तमः ॥ ९ ॥ वि ॥
भद्रो नो अग्निराहुतो भद्रारातिः सुभगा भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ।
भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सुसासहिः ।
अवस्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टये ॥ १० ॥
अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे देहि जातवेदोमहिश्रवः ।

स इधानो वसुष्कविरग्निरीडेन्यो गिरा।
रेवदस्मभ्यं पुर्वणीक दीदिहि।
क्षपो राजन्नुत त्मनाग्ने वस्वोरुतोषसः।
स तिग्मजंभ रक्षसो दह प्रति॥११॥ टा॥
विशो विशो वो अतिथिं वाजयतः पुरुप्रियं।
अग्निं वो दुर्यं वचःस्तुषे शूषस्यमन्मभिः।
यं जनासो हविष्मंतो मित्रं न सर्पिरासुतिं।
प्रशꣳसंति प्रशस्तिभिः।
पन्याꣳसं जातवेदसं यो देवतात्युद्यता।
हव्यान्यैरयद्दिवि॥१२॥ टा॥
समिद्धमग्निꣳ समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवं।
विप्रꣳ होतारं पुरुवारमद्रुहं कविꣳ सुम्नैरीमहे जातवेदसं।
त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यं।
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा निषेदिरे।
विभूषन्नग्न उभयाꣳ अनुव्रता दूतो देवानाꣳ रजसी समीयसे।
यत्ते धीतिꣳ सुमतिमावृणीमहे धस्मा नस्त्रिवरूथः शिवो भवा॥१३॥ट
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः।
वायोरनीके अस्थिरन्।
यस्य त्रिधात्ववृतं बर्हिस्तस्थावसंदिनं।
आपश्चिन्निदधा पदं।
पदं देवस्य मीढुषो नाधृष्टाभिरूतिभिः।
भद्रा सूर्य इवोपदृक्॥१४॥ ह॥

॥ इति अर्धप्रपाठकः॥

अभि त्वा पूर्वपीतय इंद्रस्तोमेभिरायवः।
समीचीनास ऋभवः समस्वरन् रुद्रा गृणंत पूर्व्यं।
अस्येदिंद्रो वावृधे वृष्ण्यं३ शवो मदे सुतस्य विष्णवि।
अद्यामतस्य महिमानमायवोऽनुष्टुवंति पूर्वथा॥ १॥ रि॥
प्र वामर्चंत्युक्थिनो नियाविदो जरितारः।
इंद्राग्नी इष आवृणे।
इंद्राग्नी नवतिं पुरो दासपत्नीरधूनुतं।
साकमेकेन कर्मणा।
इंद्राग्नी अपसस्पर्युपप्रयंति धीतयः।
ऋतस्य पथ्या३ अनु।
इंद्राग्नी तविषाणि वां३ सधस्थानि प्रयां३ सिच।
युवोरप्तूर्यं३ हितं॥ २॥ टा॥
शग्ध्यू३षु शचीपत इंद्र विश्वाभिरूतिभिः।
भगन्नहि त्वा यशसं वसुविदमनु शूर चरामसि।
पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः।
नकिर्हि दानं परिमर्धिषत्त्वे यद्यद्यामि तदाभर॥ ३॥ चु॥
त्वं ह्येहि चेरवे विदा भगं वसुत्तये।
उद्वावृषस्व मघवन् गविष्टय उदिंद्राश्वमिष्टये।
त्वं पुरूसहस्राणि शतानि च यूथा दानाय मंहसे।
आ पुरंदरं चकृम विप्रवचस इंद्रं गायंतोऽवसे॥ ४॥ खौ॥
यो विश्वा दयते वसु होता मंद्रो जनानां।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यंत्वग्नये।

अश्वं न गीर्भी रथ्यꣳ सुदानवो मर्मृज्यंते देवयवः।
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम्॥५॥यु॥
इमं मे वरुण श्रुधी हवमद्या च मृडय।
त्वामवस्यूराचके॥६॥
कया त्वं न ऊत्याभिप्रमंदसे वृषन्।
कया स्तोतृभ्य आभर॥७॥य॥
इंद्रमिद्देवतातय इंद्रं प्रयत्यध्वरे।
इंद्रꣳ समीके वनिनो हवामह इंद्रं धनस्य सातये।
इंद्रो मह्ना रोदसी पप्रथच्छव इंद्रः सूर्यमरोचयत्।
इंद्रे ह विश्वा भुवनानि येमिर इंद्रे स्वानास इंदवः॥८॥
विश्वकर्मन् हविषावावृधानः स्वयं यजस्व तन्वा३ꣳ स्वा हि ते।
मुह्यंत्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु॥९॥
अया रुचा हरिण्या पुनानो विश्वा द्वेषाꣳसि तरति सयुग्वभिः
सूरो न सयुग्वभिः।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः।
विश्वा यद्रूपा परियासृक्वभिः सप्तास्येभिर्ऋक्वभिः।
प्राचिमनु प्र दिशं याति चेकितत्सꣳ रश्मिभिर्यतते दर्शतो रथो
दैव्यो दर्शतो रथः।
अग्मन्नुक्थानि पौꣳस्येंद्रं जैत्राय हर्षयम्।
वज्रश्च यद्भवतो अनपच्युता समत्स्वनपच्युता।
त्वꣳ ह त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आदम
ऋतस्य धीतिभिर्दमे।

परावतो न साम तद्यत्रारणंति धीतयः।
त्रिधातुभिररुषीभिर्वयो दधे रोचमानो गभस्त्योः ॥१०॥ के॥
उत नो गोषणिं धियमश्वसां वाजसामुत।
नृवत्कृणुह्यूतये ॥११॥ यौ॥
शशमानस्य वा नरः स्वेदस्य सत्यशवसः।
विदा कामस्य वेनतः ॥१२॥ व॥
उप नः सूनवो गिरः शृण्वंत्वमृतस्य ये।
सुमृडीका भवंतु नः ॥१३॥ रौ॥
प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे।
शुची उपप्रशस्तये।
पुनाने तन्वा मिथः स्वेन दक्षेण राजथः।
ऊह्याथे सनादृतं।
मही मित्रस्य साधथस्तरंती पिप्रती ऋतं।
परि यज्ञं निषेदथुः ॥१४॥ क॥
अयमु ते समतसि कपोत इव गर्भधिं।
वचस्तच्चिन्न ओहसे।
स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते।
विभूतिरस्तु सूनृता।
ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो।
समन्येषु ब्रवावहै ॥१५॥ ह ॥
गाव उपवदावटे मही यज्ञस्य रप्सुदा।
उभा कर्णा हिरण्यया।

अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु।
अवटस्य विसर्जने।
सिंचंति नमसावटमुच्चाचक्रं परिज्मानं।
नीचीनवारमक्षितं ॥१६॥ रा॥
मा भेम मा श्रमिष्मोग्रस्य सख्ये तव।
महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुं।
सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति।
मध्वा संपृक्ताः सारघेण धेनवस्तुयमेहि द्रवा पिब ॥१७॥ वी॥
इमा उ त्वा पुरूवसो गिरो वर्द्धंतु या मम।
पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत।
अयꣳ सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे।
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥१८॥ रि॥
यस्यायं विश्व आर्यो दासश्शेवधिपा अरिः।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः।
तुरण्यवो मधुमंतं घृतश्चुतं विप्रासो अर्कमानृचुः।
अस्मे रयिः पप्रथे वृष्ण्यꣳ शवोऽस्मे स्वानास इंदवः ॥१९॥ त॥
गोमन्न इंदो अश्ववत्सुतः सुदक्ष धनिव।
शुचिं च वर्णमधि गोषु धारय।
स नो हरीणां पत इंदो देवप्सरस्तमः।
सखेव सख्ये नर्यो रुचे भव।
सनेमि त्वमस्मदा अदेवं कंचिदत्रिणं।
साह्वाꣳ इंदो परि बाधो अपद्वयुं ॥२०॥ ल॥

अंजते व्यंजते समंजते क्रतुꣳ रिहंति मध्वाभ्यंजते।
सिंधोरुच्छ्वासे पतयंतमुक्षणꣳ हिरण्यपावाः पशुमप्सु गृभ्णते।
विपश्चिते पवमानाय गायत मही न धारात्यंधो अर्षति।
अहिर्न जूर्णामतिसर्पति त्वचमत्यो न क्रीडन्नसरद्वृषा हरिः।
अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः।
हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः॥२१॥लो॥

॥ इति अष्टमः प्रपाठकः ॥

विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः।
चनो धाः सहसो यहो।
यच्चिद्धि शश्वता तना देवंदेवं यजामहे।
त्वे इद्धूयते हविः।
प्रियो नो अस्तु विश्पतिर्होता मंद्रो वरेण्यः।
प्रियाः स्वग्नयो वयं॥१॥ ही॥
इंद्रं यो विश्वतस्परिहवामहे जनेभ्यः।
अस्माकमस्तु केवलः।
स नो वृषन्नमुं चरुꣳ सत्रादावन्नपावृधि।
अस्मभ्यमप्रतिष्कुतः।
वृषा यूथेववꣳसगः कृष्टीरियर्त्योजसा।
ईशानो अप्रतिष्कुतः॥२॥ ह॥
त्वं नश्चित्र ऊत्या वसो राधाꣳसि चोदय।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः।

पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः।
अग्ने हेडाꣳ सि दैव्या युयोधि नोऽदेवानि ह्वराꣳ सि च॥३॥की॥
किमित्ते विष्णो परिचक्षि नाम प्रयद्ववक्षे शिपिविष्टो अस्मि।
मा वर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे वभूय।
प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शꣳ सामि वयुनानि विद्वान्।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके।
वषट् ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यं।
वर्धंतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः॥४॥ते॥
वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु।
आयाहि सोमपीतये स्पार्हो देव नियुत्वता।
इंद्रश्चवायवेषाꣳ सोमानां पीतिमर्हथः।
युवाꣳ हि यंतीदवो निम्नमापो न सध्र्यक्।
वायविंद्रश्च शुष्मिणा सरथꣳ शवसस्पती।
नियुत्वंता न ऊतय आयातꣳ सोमपीतये॥५॥ता॥
अध क्षपापरिष्कृतो वाजाꣳ अभिप्रगाहसे।
यदी विवस्वतो धियो हरिꣳ हिन्वंति यातवे।
तमस्य मर्जयामसि मदो य इंद्रपातमः।
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः।
तं गाथया पुराण्या पुनानमभ्यनूषत।
उतो कृपंत धीतयो देवानां नाम विभ्रतीः॥६॥लु॥
अश्वन्न त्वा वारवंतं वंदध्या अग्निं नमोभिः।
सम्राजंतमध्वराणां।

स या नः सूनुः शवसा पृथुप्रगामा सुशेवः।
मीढ्वाꣳ अस्माकं बभूयात्।
स नो दुराच्चासाच्च निमर्त्यादघायोः।
पाहि सदमिद्विश्वायुः॥७॥ टि॥
त्वमिंद्र प्रतूर्तिष्वभि विश्वा असि स्पृधः।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः।
अनु ते शुष्मं तुरयंतमीयतुः क्षोणी शिशुं न मातरा।
विश्वास्ते स्पृधः श्नथयंत मन्यवे वृत्रं यदिंद्र तूर्वसि॥८॥ टा॥
यज्ञ इंद्रमवर्धयद्यद्भूमिं व्यवर्तयत्।
चक्राण ओपशं दिवि।
व्या३ंतरिक्षमतिरन्मदे सोमस्य रोचना।
इंद्रो यदभिनद्वलं।
उस्रा आजदंगिरोभ्य आविष्कृण्वन् गुहासतीः।
अर्वांचं नुनुदे वलं॥९॥ पी॥
त्यमुवः सत्रासाहं विश्वासु गीर्ष्वायतं।
आच्यावयस्यूतये।
युध्मꣳ संतमनर्वाणꣳ सोमपामनपच्युतं।
नरमवार्यक्रतुं।
शिक्षा ण इंद्र राय आ पुरु विद्वाꣳ ऋचीषम।
अवा नः पार्ये धने॥१०॥ त॥
तवत्यदिंद्रियं बृहत्तव दक्षमुत क्रतुं।
वज्रꣳ शिशाति धिषणा वरेण्यं।

तव द्यौरिंद्र पौंस्यं पृथिवी वर्धति श्रवः।
त्वामापः पर्वतासश्च हिन्विरे।
त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः।
त्वां शर्द्धो मदत्यनु मारुतं॥ ११॥ ठी॥
नमस्ते अग्न ओजसे गृणंति देव कृष्टयः।
अमैरमित्रमर्दय।
कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिं।
उरुकृदुरु णस्कृधि।
मा नो अग्ने महाधने परावर्ग् भारभृद्यथा।
संवर्गꣳ सꣳ रयिं जय॥ १२॥
समस्य मन्यवे विशो विश्वा नमंत कृष्टयः।
समुद्रायेव सिंधवः।
विचिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना।
वज्रेण शतपर्वणा।
ओजस्तदस्य तित्विष उभे यत्समवर्तयत्।
इंद्रश्चर्मेव रोदसी॥ १३॥ तौ॥
सुमन्मा वस्वी रंती सूनरी।
सरूपवृषन्नागहीमौ भद्रौ धुर्यावभि।
ताविमा उपसर्पतः।
नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति।
शृंगेभिर्दशभिर्दिशन्॥ १४॥

॥ इति अर्धप्रपाठकः॥

पन्यं पन्यमित्सोतार आधावत मद्याय।
सोमं वीराय शूराय।
एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायन्।
इंद्रं गीर्भिर्गिर्वणसं।
पाता वृत्रहा सुतमा घा गमन्नारे अस्मत्।
नियमते शतमूति॥१॥ ति॥
आ त्वा विशंत्विंदवः समुद्रमिव सिंधवः।
न त्वामिंद्रातिरिच्यते।
विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे।
य इंद्र जठरेषु ते।
अरं त इंद्र कुक्षये सोमो भवतु वृत्रहन्।
अरं धामभ्य इंदवः॥२॥ क॥
जरावोधतद्विविड्ढि विशेविशे यज्ञियाय।
स्तोमं रुद्राय दृशीकं।
स नो महां अनिमानो धूमकेतुः पुरुश्चंद्रः।
धिये वाजाय हिन्वतु।
स रेवां इव विश्पतिर्दैव्यः केतुः शृणोतु नः।
उक्थैरग्निर्बृहद्भानुः॥३॥ ह॥
तद्वो गाय सुते सचा पुरुहूताय सत्वने।
शं यद्गवे न शाकिने।
न घा वसुर्नियमते दानं वाजस्य गोमतः।
यत्सीमुपश्रवद्गिरः।

